आत्यन्तिकप्रतिनिधिनिषेधार्थं पुनः स्तेयग्रहणम् । प्रतिवादी[1] प्रतिनिधिः ॥

प्रत्यर्थिनि स्थापितेर्थिनः कार्यमाह याज्ञवल्क्यः ( २. ६. )

प्रत्यर्थिनोग्रतो लेख्यं यथावेदित[2]मर्थिना ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम्[3] ॥

स्मृत्यन्तरे[4]

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थं[5] च देशकालाविरोधि च ॥
वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् ।
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् ।
यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥ इति ।

अत्रोक्तवर्षादीनामाध्यादिषूपयोगो वक्ष्यते ॥ देशादीनां च क्वचिदुपयोग उक्तः स्मृत्यन्तरे

देशश्चैव[6] तथा स्थानं संनिवेशस्तथैव च ।
जातिः संज्ञाधिवासश्च[7] प्रमाणं क्षेत्र[8]नाम च ॥

1 B, C, D, F, K, N omit प्रतिवादी प्रतिनिधिः.
2 F, G, K, N यदावेदितं for यथावेदितम्.
3 H जात्यादिनिश्चितं for जात्यादिचिह्नितम्.
4 F omits स्मृत्यन्तरे.
5 D लिखितार्थं for निखिलार्थम्.
6 वीर० ( p. 64 ) reads देशं for देशः.
7 स्मृतिच० reads निवासः for अधिवासः.
8 B, D क्षत्रनाम for क्षेत्रनाम.

पितृपैतामहं चैव पूर्वराजानुकीर्तनम्[1] ।
स्थावरेषु विवादेषु दशैतानि प्रवेशयेत्[2] ।। इति ।

कात्यायनः

पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ।।

शोधनस्यावधिमाह नारदः

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ।।
भाषाया उत्तरं यावत्प्रत्यर्थी न निवेशयेत् ।
अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम्[3] ।। इति (नारद २. ७)

एवं पक्षलक्षणे स्थिते तद्विरुद्धाः पक्षाभासा अर्थसिद्धा अप्युक्ताः स्मृत्यन्तरे

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ।। इति ।

अप्रसिद्धं खपुष्पं ममापहृतमिति । निराबाधं मम दीपप्रकाशेनायं व्यवहरतीति । निरर्थं कचटतपं ममापहृतमिति । निष्प्रयोजनं मत्प्रातिवेशिकः सुस्वरमधीत इति । असाध्यं सभ्रूभङ्गं हसितोनेनेत्यादि[4] । विरुद्धं मूकेनाहं शप्त इति । पुरराष्ट्रादिविरुद्धं वा । तथा च स्मर्यते

राज्ञा विवर्जितो[5] यस्तु यश्च पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ।।

---

1 H पूर्वराजप्रकीर्तितं for पूर्वराजानुकीर्तनम्; K पूर्वराजायुकीर्तनम्.
2 अपरार्क, स्मृतिच॰ and वीर॰ read निवेशयेत्.
3 D विचक्षणं for विवक्षितम्.
4 F उपहसितोनेन for हसितोनेन.
5 B, C, D, G, K राज्ञा तु वर्जितो for राज्ञा विवर्जितो.

अन्ये वा ये पुरग्राम[1]महाजनविरोधकाः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥ इति ।

[2]न चानेकप्रतिज्ञत्वमपि पक्षाभासत्वमिति

बहुप्रतिज्ञं यत्कार्यं व्यव[3]हारे सुनिश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥ इति

कात्यायनीयेन विरोधापत्तेः ॥ यत्तु—अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति—इति त[4]द्युगपन्न सिध्यति क्रमेण तु सिध्यतीति व्याख्येयम् ॥

एवं पूर्वपक्षे लिखिते यत्कार्यं तदाह याज्ञवल्क्यः ( २. ७ )

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ॥ इति ।

उत्तरं लक्षयति नारदः

पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥

अस्य चातुर्विध्यमाह कात्यायनः ( =नारद २. ४ )

मिथ्या संप्रतिप[5]त्त्या वा प्रत्यवस्कन्दनेन वा ।
प्राङ्न्यायप्रतिसिद्ध्या वा उत्तरं स्याच्चतुर्विधम् ॥ इति ।

1 H पौरविरोधकाः । अनादेयास्तु, omitting by oversight the intervening words.

2 B, C omit न before चानेकप्रतिज्ञत्वमपि.

3 अपरार्क and वीर॰ read व्यवहारेषु निश्चितम्, and व्यव. मा. (p. 296) reads व्यवहारेष्वनिश्चितम्.

4 N omits तद्युगपन्न सिध्यति before क्रमेण तु सिध्यति.

5 नारद (II. 4) reads संप्रतिपत्तिर्वा प्रत्यवस्कन्दमेव वा। प्राङ्न्यायविधिसाध्यं वा. अपरार्क reads प्राङ्न्यायविधिसिद्ध्या वा.

मिथ्योत्तरं च लक्षयति स एव

अभियुक्तोभियोगस्य[1] यदि कुर्यादपह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ इति ।

तच्च चतुर्विधमित्याह स एव ( नारद २. ५ )

मिथ्यैतन्नाभिजानामि तदा मेभूदसंनिधिः ।
अजातश्चास्मि[2] तत्काल इति मिथ्या चतुर्विधम् ॥ इति ।

संप्रतिपत्त्युत्तरं तूक्तं स्मृत्यन्तरे

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ॥ इति ।

प्रत्यवस्कन्दनोत्तरं लक्षयति नारदः

अर्थिना[3] लिखितो योर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम् ॥ इति ।

प्राङ्न्यायोत्तरं लक्षयति कात्यायनः

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥ इति ।

एवमुत्तरलक्षणे स्थिते तद्रहितानामुत्तराभासत्वमर्थसिद्धमपि स्पष्टीकृतं स्मृत्यन्तरे

संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् ॥
यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥ इति ।

---

1 B अभियुक्तो नियोगस्य for अभियुक्तोभियोगस्य.

2 B, D, F अज्ञातश्चास्मि for अजातश्चास्मि. D तत्कालं for तत्काले.

3 व्यव. मा. and परा. मा. read अर्थिनाभिहितः.

कात्यायनोपि

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवै[1]कदेशे च संकरात्तदनुत्तरम् ॥ इति ।

अनुत्तरत्वे च कारणमाह स एव

न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ इति ।

अत्रायमर्थः । मिथ्याकारणोत्तरयोः संकरे द्वयोरपि [2]वादिनोः क्रिया प्राप्नोति–मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि–इति नारदोक्तेः । तदुभयमेकस्मिन्व्यवहारे विरुद्धम् । तथा कारणप्राङ्न्यायसंकरे तु प्रत्यर्थिन एव क्रियाद्वयम् । प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्–इति व्यासोक्तेः । अत्र च–प्राङ्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथा–इति व्यासोक्त्यैव प्राङ्न्याये जयपत्रेण प्राङ्न्यायदर्शिभिर्वा भावयितव्यम् । कारणोत्तरे तु साक्षिलेख्यादिभिरित्यत्रापि विरोधः । एवं त्रिचतुस्संकरेपि द्रष्टव्यम् । एतेषां [3]चानुत्तरत्वं यौगपद्येन । क्रमेण तूत्तरत्वमेव ॥ क्रमश्चा[4]र्थिप्रत्यर्थिसभ्येच्छया भवति । तथा च हारीतः

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं [5]चापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥
यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् ।
उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोन्यथा ॥

---

1 C चैवैकदेशं for चैवैकदेशे.
2 G द्वयोरपि वादिप्रतिवादिनोः for द्वयोरपि वादिनोः.
3 D एषां वानुत्तरत्वेन for एतेषां चानुत्तरत्वं; K एषां चानुत्तरत्वं.
4 N reads क्रमश्चार्थिसभ्येच्छया भवति.
5 B, C, D सत्यं वापि for सत्यं चापि.

संकीर्णं भवतीति शेषः । अस्यार्थः । सुवर्णवस्त्राभियोगे सुवर्णं न गृहीतं वस्त्रं तु गृहीतं प्रतिदत्तं चेत्यत्रादौ[1] सुवर्णविषये व्यवहृत्य पश्चाद्वस्त्रविषये व्यवहर्तव्यम् । एवं मिथ्याप्राङ्न्याययोः कारणप्राङ्न्याययोश्च संकरे योज्यम् । तथा तत्रैवाभियोगे सुवर्णं गृहीतं वस्त्रं तु न गृहीतं प्रतिदत्तमिति वा वस्त्रविषये पूर्वं जित इति वोच्यते[2] । तत्र वस्त्रविषय एव व्यवहर्तव्यं न सुवर्णविषये भूरिविषयत्वेपि क्रियाभावात् । यत्र त्वियं गौर्मदीयामुकस्मिन्काले नष्टाद्यास्य[3] गृहे दृष्टेत्यभियोगे मिथ्यैतदेतत्प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थितेति मिथ्याकारणयोः कृत्स्नपक्षव्यापित्वं तत्र नानुत्तरत्वम् । सकारणं[4] मिथ्योत्तरमिदम् । अत्र च प्रत्यर्थिन एव क्रिया नार्थिनोपि[5] मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्—इति हारीतोक्तेः ॥ एवं मिथ्याप्राङ्न्याययोः कारणप्राङ्न्याययोश्च कृत्स्नपक्षव्यापित्वे[6] सति नानुत्तरत्वम् । अत्रोभयत्रापि प्रत्यर्थिन एव क्रियेति न[7] काप्येकस्मिन्व्यवहारे द्वयोः क्रियेत्यलम् ॥

उत्तरलेखनोत्तरं साधनोक्तौ क्रममाह याज्ञवल्क्यः ( २. ७–८ )

ततोर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोन्यथा ॥ इति ।

1 A, E, M ०दत्तं वेत्यत्रादौ for ०दत्तं चेत्यत्रादौ; B चेत्यादौ for चेत्यत्रादौ.

2 C चोच्यते for वोच्यते.

3 B, C, D, G, H नष्टास्याद्य गृहे for नष्टाद्यास्य गृहे; K नष्टा व्याधगृहे.

4 F, G सकारणमिथ्योत्तरं for सकारणं मिथ्योत्तरम्.

5 A, E, M नार्थिनः for नार्थिनोपि.

6 B, C, D, F, G, H, K, N कृत्स्नपदव्यापित्वे for कृत्स्नपक्षव्यापित्वे.

7 N omits न काप्येकस्मिन्...क्रियेत्यलम्.



5.2.1948.

इदं च मिथ्योत्तरविषयम् । उत्तरान्तरे तु प्रत्यर्थिन एव साधनोपन्यासः । यथाह[1] हारीतः

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥ इति ।

एवं व्यवहारस्य चतुष्पात्त्वमाह याज्ञवल्क्यः ( २. ८. )

चतुष्पाद्व्यवहारोयं विवादेषूपदर्शितः ॥ इति ।

पाद[2]चतुष्टयं तु व्यक्तीकृतं स्मृत्यन्तरे ।

भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः ।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥ इति ।

इदं च संप्रतिपत्त्यतिरिक्तोत्तरविषयम् । संप्रतिप[3]त्तेर्द्विपात्त्वात् । यथाह[4] बृहस्पतिः

मि[5]थ्योत्तरे चतुष्पात्स प्रत्यवस्कन्दने तथा ।
व्यवहारस्तु विज्ञेयो द्विपात्संप्रतिपत्तिषु ॥ इति ।

याज्ञवल्क्यः ( २. ९–१० )

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥
कुर्यात्प्रत्यभियोगं च कलहे साहसेषु[6] च ॥

1 D, F तथा च हारीतः for यथाह हारीतः.
2 B, F पदचतुष्टयं for पादचतुष्टयम्.
3 F संप्रतिपत्तौ for संप्रतिपत्तेः.
4 C, K यथा बृहस्पतिः for यथाह बृहस्पतिः.
5 व्यव. मा. reads मिथ्योक्तौ च चतुष्पात्स्यात् प्रत्यवस्कन्दने तथा । प्राङ्न्याये च स विज्ञेयः.
6 G साहसेषु वा for साहसेषु च.

नारदः ( २. २४ )

पूर्ववादं परित्यज्य योन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥

हीनवादी दण्ड्यो भवति न प्रकृतादर्थाद्धीयत इत्यर्थः । एतच्चार्थव्यवहारे ज्ञेयम् । यथाह स एव ( नारद २. २५ )

सर्वेष्व[1]र्थविवादेषु वाक्छले नावसीदति ।
परस्त्रीभूम्यृणादाने शास्योप्यर्थान्न हीयते ॥ इति ।

[2]पूर्वार्धस्योदाहरणार्थमुत्तरार्धम् । याज्ञवल्क्यः ( २. १७ )

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥

पूर्ववादिनः प्रतिज्ञावादिनः । पूर्वपक्षः प्रतिज्ञा । अधरीभूते कारणोत्तरोपन्यासेन प्रत्यर्थिस्वीकारेणासाध्ये । साक्षिग्रहणं प्रमाणान्तरस्याप्युपलक्षणार्थम् । स एव ( याज्ञवल्क्य २. १० )

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।

निर्णयस्य कार्यं कार्यनिर्णय इति ॥ प्रतिभूत्वेनाग्राह्यानाह कात्यायनः

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
निरु[3]द्धो दण्डितश्चैव संशयस्थो न च क्वचित् ॥
नैव रिक्थी न रिक्तश्च न[4] चैवान्यत्र वासितः ।
राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥

1 नारदस्मृति reads सर्वेष्वपि विवादेषु and पशुस्त्री०.

2 B, G omit पूर्वार्ध...र्धम्.

3 C, K, N विरुद्धो for निरुद्धो.

4 स्मृतिच०, परा. मा. and वीर० read न चैवात्यन्तवासिनः (वीर० also notices the reading अन्यत्र वासिनः).

नाशक्तो [1]धनिने दातुं दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रियां प्रति ॥ इति ।

नि[2]रुद्धो निगडादिबद्धः । संशयस्थो व्यसनी । रिक्थी पुत्रपौत्रादिर्द्रव्यग्रहणाधिकारी । रिक्तो दरिद्रः । अन्यत्र वासितो देशाद्बहिष्कृतः ॥

याज्ञवल्क्यः ( २. ५२ )

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते [3]तु न स्मृतम् ॥

लग्नकाभावे त्वाह कात्यायनः

अथ चेत्प्रतिभूर्नास्ति कार्ययो[4]ग्यस्तु वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम् ॥ इति ।

स एव

द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्ब्राह्मचारिभिः ।
शूद्रादीन्प्रतिभूहीनान्बन्धयेन्निगडेन तु ॥ इति ।

ही[5]नवादिलक्षणान्याह नारदः ( २. २४ )

पूर्ववादं परित्यज्य योन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥ इति ।

---

1 B, D, G धनिनो दातुं for धनिने दातुम्; F नाशक्तौ for नाशक्तो.

2 D, B omit the words निरुद्धो...धिकारी and अन्यत्र...ष्कृतः. F, G also did the same, but the words were added in another hand.

3 G, K न तु स्मृतं for तु न स्मृतम्. The printed editions of याज्ञ० read न तु स्मृतम्.

4 C, H, K, N कार्ययोग्यस्य वादिनः for कार्ययोग्यस्तु वादिनः. स्मृतिच० reads वादयोग्यस्य and दूताय for भृत्याय.

5 C, H, K, N omit हीनवादि...नर इति.

दुष्टं लक्षयति याज्ञवल्क्यः ( २. १३–१५ )

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते [1]चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
[2]अभियोगेथ साक्ष्ये वा दुष्टः स परिकीर्तितः ॥

सृक्किणी ओष्ठप्रान्तौ ॥ २ ॥

## ॥ [3]अथ प्रमाणनिरूपणम् ॥ ३ ॥

याज्ञवल्क्यः ( २. २२ )

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

कात्यायनोपि

यद्येको मानुषीं [4]ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥
यद्येकदेश[5]व्याप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु [6]पूर्णापि दैविकी वदतां नृणाम् ॥

1 G स्विद्यते वास्य for स्विद्यते चास्य.
2 B, C, D, F, K अभियोगे च साक्ष्ये च for अभियोगेथ साक्ष्ये वा; A, G अभियोगेथ साक्ष्ये च.
3 C, G, K अथ प्रमाणं for अथ प्रमाणनिरूपणम्.
4 अपरार्क reads मानुषीं कुर्यादन्यः कुर्यात्तु.
5 अपरार्क reads ०देशप्राप्तापि and न्याय्या for ग्राह्या.
6 B, C, D, H, K पूर्वापि for पूर्णापि.

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥
पूगश्रेणिगणादीनां[1] या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥
दत्तादत्ते[2] तथादत्ते स्वामिनो निर्णये सति ॥
विक्रयादानसंबन्धे क्रीत्वा धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥
द्वारमार्गक्रियाभोगे जलवाहादिके तथा ।
भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः ॥

क्वचिद्दिव्यप्राबल्यमाह[3] बृहस्पतिः

मणिमुक्तानाणकानां[4] कूटकृन्न्यासहारकः ।
हिंसकोन्याङ्गनासेवी[5] परीक्ष्याः शपथैः सदा ॥
महापापाभिशापेषु विद्यमानेषु साक्षिषु ।
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ॥ इति ।

1 C, G, H, K, N omit the verse पूग...साक्षिणः.

2 मिता० reads दत्तादत्तेथ भृत्यानां स्वामिना; अपरार्क 'दत्तादत्ते तथादत्ते स्वामिना'. वीर० (p, 112) reads 'दत्तादत्तेषु भृत्यानां स्वामिनां'; अपरार्क and वीर० (p. 112) read 'विक्रीयादानसंबन्धे'. A, B, C, F, K स्वामिनां for स्वामिनः; G स्वामिना. वीर० reads 'धनमयच्छति'.

3 C, H, K, N before क्वचिद्दिव्य० read दत्तादत्ते (K, N दत्वादत्ते) दत्तमिति प्रतिश्रुत्यानर्पिते तथादत्ते दत्त्वा पुनराच्छिद्य गृहीते । स्वामिनां निर्णये सपीति (तीति ?) एतत्स्वामिकमेतदिति निश्चये सति.

4 B, D ०मुक्ताप्रवालानां for ०मुक्तानाणकानाम्; F also read प्रवालानां but corrects to नाणकानां in another hand. The परा० मा. and वीर० (p. 114) read मुक्ताप्रवालानां.

5 H अन्यागमासेवी for अन्याङ्गनासेवी.

व्यासः

न मयैतत्कृतं लेख्यं कूटमेतेन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥
अरण्ये विजने[1] रात्रावन्तर्वेश्मनि साहसे ।
न्यासापह्नवने चैव दिव्या संभवति क्रिया ॥

बृहस्पतिः

लिखिते साक्षिवादे च संदिग्धं यत्र जायते ।
अनुमाने च संभ्रान्ते तत्र दिव्यं विशोधनम् ॥

क्वचित्साक्षिदिव्ययोर्विकल्पमाह स एव

प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके[2] ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव[3] वा ॥
ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयोपि[4] वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥ इति ।

युक्तिलेशो युक्त्येकदेशः । वाचिके पारुष्ये ब्रह्महासीत्येवमाद्याक्रोशात्मक इत्यर्थः । यत्तु कात्यायनः—वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत्—इति तदल्पवाक्पारुष्यपरम् । भूमिग्रहणं स्थावरमात्रोपलक्षणार्थम्[5] । यथाह पितामहः—स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्—इति । साक्ष्यादिसत्त्वेयं दिव्यनिषेधः । तथा च स[6] एव-साक्षिभिर्लिखितेनाथ भुक्त्या चैतान्प्रसाधयेत्—इति । स एव

1 C विजये for विजने.

2 D, F दण्डवाचके for दण्डवाचिके.

3 B, D, H, K दिव्यमेव च for दिव्यमेव वा.

4 D ०लेखादयोपि for लेशादयोपि.

5 C, D, F, G, K ०मात्रोपलक्षणं for मात्रोपलक्षणार्थम्; H मात्रोपलेशनम्.

6 C, F, G, H, K पितामहः for स एव.

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च[1] दिव्यावतारोस्ति प्रमाणं तत्र पार्थिवः ॥
निश्चेतुं ये न शक्याः स्युर्वादाः संदिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात्स सर्वस्य प्रभुर्यतः ॥

## ॥ अथ[2] लेख्यम् ॥ ४ ॥

तत्र[3] बृहस्पतिः

राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥ इति ।

यत्तु वसिष्ठेन ( व. ध. सूत्र appendix 10 )—लौकिकं राजकीयं च लेख्यं विद्याद् द्विलक्षणम्—इति द्वैविध्यमुक्तं तत्स्थानकृतस्वहस्तलिखित[4]-योरभेदमाश्रित्य । लौकिकं जानपदमिति पर्यायौ राजकीयं जानपदं लिखितं द्विविधं स्मृतम्—इति संग्रह[5]कारोक्तेः ॥ बृहस्पतिः

[6]भागदानक्रयाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥
भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् ।
विभाग[7]पत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥

1 G न वा दिव्या॰ for न च दिव्या॰.

2 A, M, N add the words इति व्यवहारमातृकाः समाप्ताः before अथ लेख्यम्.

3 B, D, K omit तत्र.

4 B, C, D. G, K लिखितयोर्भेदमाश्रित्य for लिखितयोरभेदमाश्रित्य.

5 B, D, F संग्रहोक्तेः for संग्रहकारोक्तेः.

6 B, D, G भागधान for भागदान; C भागप्रदान. B दासक्रमणादिभिः for दासऋणादिभिः.

7 H विभागं यत्र for विभागपत्रं.

भूमिं दत्त्वा तु यत्पत्रं कुर्याच्चन्द्रार्क[1]कालिकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयले[2]ख्यं तदुच्यते ॥
जङ्गमं स्थावरं बन्धं दत्त्वा लेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥
ग्रा[3]मो देशश्च यत्कुर्यान्मतं लेख्यं परस्परम् ।
राजाविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत् ।
कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥
धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्या[4]च्च कारयेत् ।
उद्धारपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥

आदिशब्दाद्विशुद्ध्यादिपत्रग्रहणम् ॥

विशुद्ध्यादिप[5]त्राण्याह कात्यायनः

अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः ।
विशुद्धिपत्रकं ज्ञे[6]यं तेभ्यः साक्षिसमन्वितम् ॥
उत्तमेषु समस्तेषु अभिशापे समागते ।
वृत्तानुवादे लेख्यं यत्तज्ज्ञेयं सन्धिपत्रकम् ॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते ॥ इति ।

---

1 B, D चन्द्रार्कसाक्षिकं for चन्द्रार्ककालिकम्; G has ०कालिकं in the text and ०साक्षिकं in the margin.

2 D क्रमलेख्यं for क्रयलेख्यं.

3 परा. मा. reads ग्रामादिसमयात्कुर्यान्मतं; अपरार्क reads मतलेख्यं, वीर० reads सत्यलेख्यम्.

4 H कुर्यात्प्रकारयेत् for कुर्याच्च कारयेत्.

5 B, D, F विशुद्धिपत्राण्याह for विशुद्ध्यादिपत्राण्याह.

6 वीर० (p. 189) reads देयं for ज्ञेयम्.

अन्वाधिपत्रमाह प्रजापतिः

धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं[1] चास्य समर्पयेत् ॥

याज्ञवल्क्योऽपि ( २. ९४ )

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत् ॥

पूर्वोक्तयोः स्वहस्त[2]कृतान्यहस्तकृतयोर्विशेषमाह नारदः ( ४. १३५ )

लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ इति ।

याज्ञवल्क्यः ( २. ८९ )

विनापि साक्षिभिर्लेख्यं[3] स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥

बलं बलात्कारः । उपधिर्लोभादिः । अन्यकृते विशेष[4]माह स एव (या. २. ८४–८५)

यः कश्चिदर्थो नि[5]ष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम्[6] ॥
समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ इति ।

---

1 C पूर्वं वास्य for पूर्वं चास्य.

2 A, D, E, M स्वहस्तान्यहस्तकृतयोः for स्वहस्तकृतान्यहस्तकृतयोः.

3 D साक्षिमल्लेख्यं for साक्षिभिर्लेख्यं.

4 B, C, D, G, K omit अन्यकृते before विशेषमाह; F also did so, but corrected it.

5 B, D कश्चिदर्थोभिमतः for कश्चिदर्थो निष्णातः.

6 D धनिकपूर्वके for धनिकपूर्वकम्.

सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इत्यादि स एव (या. २. ८६–८८)

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोन्ते ततो लिखेत् ॥

समाः संख्यातो गुणतश्च । क्वचिदसमा[1] इत्यकारप्रश्लेषः ॥ नारदः

अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत् ।
साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः ॥

त्रिविधं राजशासनमित्युक्तं तद्दर्शयतो याज्ञवल्क्यबृहस्पती (या. १. ३१८–३२०)

दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत्[2] ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥
प्रतिग्रहपरीमाणं दान[3]च्छेदोपवर्णनम् ।
स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥

---

1 N reads क्वचिदसमाः समा इत्यकारे प्रश्लेषः.

2 H धारयेत् for कारयेत्.

3 F दानं च्छेदोपवर्णनं for दानच्छेदोपवर्णनम्.

निबन्धः आकरादौ[1] राजादिदत्तं नियतलभ्यम् । प्रतिगृह्यते यत्स[2] प्रतिग्रहो भूम्यादिः तस्य परिमाणमियत्ता[3] । दीयते यत्तद्दानं गृहादि तस्य छेदो मर्यादा तस्या[4] उपवर्णनं कथनम् । तथा

देशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिना तुष्टः प्रसादलिखितं तु तत् ॥
पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥ इति ।

राज्ञोनुकल्पमाह व्यासः

राज्ञा[5] तु स्वयमादिष्टः सन्धिविग्रहलेखकः ।
ताम्रपट्टे[6] पटे वापि प्रलिखेद्राजशासनम् ॥

अत्र च राज्ञा स्वमतं लेख्यमित्याह स एव

संनिवेशं प्रमाणं च[7] स्वहस्तेन लिखेत्स्वयम् ।
मतं मेमुकपुत्रस्य अमुकस्य महीपतेः ॥

संनिवेशं प्रमाणं चेति पूर्ववाक्येनान्वयः । वसिष्ठस्तु राजलेख्यस्य चातुर्विध्यमाह

शासनं प्रथमं ज्ञेयं जयपत्रं तथापरम् ।
आज्ञाप्रज्ञापनापत्रे राजकीयं चतुर्विधम् ॥

---

1 C आकारादौ for आकरादौ.

2 B, D यत्प्रतिग्रहः for यत्स प्रतिग्रहः; G, K यत्तत्प्रतिग्रहः.

3 B, D omit the words परिमाणमियत्ता...यस्य; F also did the same, but corrects in another hand.

4 F तस्योपवर्णनं for तस्या उपवर्णनम्.

5 C, D राजा तु स्वयमादिष्टसन्धि० for राज्ञा तु स्वयमादिष्टः सन्धि०; K ०दिष्टसन्धि०.

6 A ताम्रपट्टे वापि पटे for ताम्रपट्टे पटे वापि.

7 H has a confused text here. It reads प्रमाणं च कुर्याच्चन्द्रार्ककालिकम्. H seems to have gone back several pages, copied a few lines and then returns to मतं मे.

सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च ।
कार्यमादिश्यते[1] येन तदाज्ञापत्रमुच्यते ॥
ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्हितेषु[2] च ।
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥

शासनजयपत्रे प्रागुक्ते ॥ याज्ञवल्क्यः ( २. ९१ )

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा[3] ।
भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत् ॥

नारदः ( ४. १४२ )

लेख्ये देशान्तरन्यस्ते[4] शीर्णे दुर्लिखिते हृते ।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम् ॥

द्रष्टारः साक्षिणः । तदभावे दिव्यम् । अलेख्यसाक्षिके दिव्यं[5] व्यवहारे विनिर्दिशेत्—इति कात्यायनोक्तेः । याज्ञवल्क्यः ( २. ९२ )

संदिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ॥

युक्तिरर्थापत्तिः । प्राप्तिर्द्वयोरेकत्रावस्थानम् । चिह्नं मुद्रादि । क्रिया[6] साक्ष्यादिः[7] । संबन्धोनागतः । आगमः संभावितः प्राप्त्युपायः । हेतुरनुमानम् ॥ प्रजापतिः

---

1 H reads प्रदिश्यते येन पत्रे प्रज्ञापनाय तत्, omitting two lines.

2 B, D अभ्यर्हितेषु तु for अभ्यर्हितेषु च; F also read तु but corrected it to च.

3 B, C, D, G, H, K तथा हृते for हृते तथा; F also at first wrote तथा हृते but corrected into हृते तथा.

4 B, D देशान्तरे न्यस्ते; for देशान्तरन्यस्ते; F देशान्तरं न्यस्ते.

5 B, D, K दैवीं for दिव्यम्.

6 B, D, F place क्रिया साक्ष्यादिः before चिह्नम्.

7 G, K साक्ष्यादि for साक्ष्यादिः.

कार्यो यत्नेन महता निर्णयो राजशासने ।
राज्ञां स्वहस्ततो मुद्रालेखका[1]क्षरदर्शनात् ॥

दुष्टलेख्यान्याह बृहस्पतिः

मुमूर्षुशत्रुभीतार्तस्त्रीमत्तव्यसनातुरैः ।
निशोपधिबलात्कारकृतं लेख्यं न सिध्यति ॥
दूषितो गर्हितः साक्षी यत्रैको विनिवेशितः ।
कूटलेख्यं तु तत्प्रोक्तं लेखको वापि तद्विधः ॥ इति ॥

॥ इति[2] लेख्यप्रकरणम् ॥ ४ ॥

## अथ भुक्तिः ॥ ५ ॥

नारदः ( ४. ८५ )

आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥

सागमत्ववद्विशेषणान्तरवैशिष्ट्यमप्याह व्यासः

सागमो दीर्घकालश्चा[3]विच्छेदोपरवोज्झितः ।
प्रत्यर्थिसंनि[4]धानश्च पञ्चाङ्गो भोग इष्यते ॥

भुक्तिमात्रेण साध्यासिद्धिमाह नारदः ( ४. ८६ )

सं[5]भोगं केवलं यस्तु कीर्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥ इति

---

1 G लेखकान्तरदर्शनात् for लेखकाक्षरदर्शनात्.

2 A, B, C, D, F, G, H, K omit इति लेख्यप्रकरणम्.

3 अपरार्क reads 'च्छेदोपाधिविवर्जितः'; व्यव. मा. 'निश्छिद्रोन्यरवोज्झितः'; परा. मा. and वीर० '०कालश्च विच्छेदोपरमो०.' D, F ०विच्छेदोपरबोधितः for ०विच्छेदोपरवोज्झितः; H विच्छेदोपनबोधितः (?).

4 H अन्यार्थसंनिधानश्च for प्रत्यर्थिसंनिधानश्च.

5 नारद reads भोगं केवलतो यस्तु and स विज्ञेयस्तु तस्करः.

इदं चागमस्मरणयोग्ये काले ज्ञेयम् । तदयोग्ये तु भुक्तिमात्रमपि प्रमाणमित्याह[1] स एव (नारद ४. ८९)

स्मार्ते काले क्रिया भूमेः[2] सागमा भुक्तिरिष्यते ।
अस्मार्ते[3]ऽनुगमाभावात्क्रमात्त्रिपुरुषागता ॥ इति ।

अनुगमाभावाद्योग्यानुपलब्ध्या आगमाभावनिश्चयस्या[4]संभवात् ॥ अस्मार्तेऽप्यागमाभावस्मरणानुवृत्तावाह स एव (नारद ४. ८७)

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥ इति ।

यत्तु स एव (नारद ४. ९१)

अन्यायेनापि यद्भुक्तं पित्रा[5] पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥ इति

तदागमं विनाप्यन्यायेनापि यत्पित्रा सह पूर्वतरैस्त्रिभिर्भुक्तं तदपाहर्तुं न शक्यं, [6]किं पुनरागमाभावनिश्चयासंभव इति योज्यम् । यदपि हारीतीयम्[7]

यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपा[8]हर्तुं क्रमात्त्रिपुरुषागतम् ॥ इति

---

1 A प्रमाणमाह for प्रमाणमित्याह.
2 नारदस्मृति reads भुक्तेः for भूमेः.
3 B, D, F omit अस्मार्ते...संभवात्.
4 C ०निश्चयस्य संभवात् for निश्चयस्यासंभवात्.
5 नारदस्मृति reads पितुः for पित्रा and व्यव. मा. reads अपाकर्तुम्.
6 B omits किं before पुनः.
7 B, D हारीतायां for हारीतीयम्; F हारीतातायाम्.
8 B, C, D, F, G, H, K अपाकर्तुं for अपाहर्तुम्.

तदत्यन्तोपलभ्यमानागमं विनेति व्याख्येयं न [1]चागमस्वरूपं विनेति ॥ यत्पुनर्याज्ञवल्कीयम् ( २. २८ )

आगमस्तु कृतो येन सोभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ इति

तद्यागमकर्तुरेवागमानुद्धारे दण्डो न तत्पुत्रादीनाम[2]पीत्येवंपरं न त्वर्थसिद्धिरिति । यथा[3]ह हारीतः

आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् ।
न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपि ॥ इति ।

याज्ञवल्क्यः ( २. २९ )

योभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥

रिक्थी अंशभागी पुत्रादिः । तमागमम् ॥ ननु[4] दीर्घकालो भोगः प्रमाण[5]मिति विरुद्धम् । यतः स्वल्पकालोपभोगेनाप्यभियोक्तुर्हानिः प्रतीयते । यथाह स एव ( या. २. २४ )

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परे[6]ण भुज्यमानाया धनस्य दशवार्षिकी ॥ इति ।

---

1 B, C, D, F, G न त्वागम० for न चागम०; K न ह्यागम०.

2 G, K पुत्रादीनामित्येवंपरं for पुत्रादीनामपीत्येवंपरम्.

3 G यथा हारीतः for यथाह हारीतः; K यदाह.

4 न तु दीर्घ० for ननु दीर्घ०.

5 B reads प्रमाणमिति यदुक्तं तत्कथं स्वल्पहानिप्रतीतेर्यथाह; D दीर्घकालो भोगः प्रमाणमिति यदुक्तं तत्कथं स्वल्पकालोपभोगेनाप्यभियोक्तुर्हानिप्रतीतेः.

6 F omits परेण...इति. A omits इति.

उच्यते । एतत्पश्यतोप्रतिषेधतस्तावत्कालीनतद्भूम्यादिजन्यफलहानिर्भवतीत्येवंपरम्[1] । न तु तद्भूम्यादिवस्तुहानिरपीति । अनागमं तु यो भुङ्क्ते ( नारद ४. ८७ )—इत्युदाहृतवचनविरोधात् ॥ कात्यायनः

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

नारदः ( ४. ८१ )

आधिः सीमा बालधनं निक्षेपोपनिधिस्त्रियः ।
राजस्वं श्रोत्रिय[2]स्वं च नोपभोगेन नश्यति ॥ (=मनु ८. १४९)

मनुः ( ८. १४६ )

संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो व[3]हन्नश्वो यश्च दम्यः प्रयुज्यते ॥

दम्यः प्रयुज्यते दमनार्थं यः समर्प्यते ॥

## ॥ [4]इति भुक्तिप्रकरणम् ॥ ५ ॥

## ॥ अथ साक्षिणः ॥ ६ ॥

टोडरानन्दे नारदः ( ४. १४७ )

संदि[5]ग्धेषु तु कार्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तदर्शनम् ॥

---

1 B, D, F तावत्कालीनभोगे तद्भूम्यादि० for तावत्कालीनतद्भूम्यादि०.

2 नारदस्मृति reads श्रोत्रियद्रव्यं न भोगेन प्रणश्यति.

3 B, D, F वहः शाखी यश्च for वहन्नश्वो यश्च; H, G, K वहन्नाख्यो यश्च.

4 A, B, C, D, F, G, H, K omit इति...प्रकरणम्.

5 नारद reads सन्दिग्धेषु च, श्रुतदृष्टानुभूतार्थात्, व्यक्तदर्शनम्.

तद्भेदानाह बृहस्पतिः

लिखितो[1] लेखितो गूढः [2]स्मारितः कुल्यदूतकौ ।
याहच्छिकश्चोत्तरश्च कार्यमध्य[3]गतोपरः ॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ॥

[4]अर्थिना पत्रे निवेशितो लिखितः । प्रत्यर्थिनार्थिप्रेरणया निवेशितो लेखितः । [5]कुड्यादिव्यवधानेन श्रावितो गूढः । पुनः पुनः कार्यं [6]स्मार्यमाणः स्मारितः । यदृच्छयैवागतः साक्षीक्रियमाणो याहच्छिकः । श्रवणाच्छ्रावणाद्वा साक्षिणामप्युपर्युपरि भाषमाण उत्तरः । अ[7]ध्यक्षः प्राड्विवाकः । इदं च सभ्यादीनामुपलक्षणम् । लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः—इति कात्यायनवाक्यात् । स एव

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन ॥
लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः ।
यदृच्छास्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥
दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥

लिखितादीनामुभयानुमतत्व एकस्यापि ग्रहणमाह याज्ञवल्क्यः (२. ७२)

[8]उभयानुमतः साक्षी भव[9]त्येकोऽपि धर्मवित् ।

---

1 The व्यव. मा. (p. 321) reads लिखितोऽलिखितो गूढः.
2 D, F स्मारितस्तुल्य० for स्मारितः कुल्य०.
3 D कार्यपृष्ठगतः.
4 B, C, D, F, K, N omit अर्थिना. B, D, F पत्रनिवेशितः for पत्रे निवेशितः. G अर्थिना स्वयं पत्रे निवेशितः.
5 H omits कुड्यादि...श्रावणाद्वा.
6 F स्मर्यमाणः.
7 In G, H the words अध्यक्षः...वाक्यात् precede कुड्यादि above.
8 F omits उभयानु...व्यासः.
9 B, C, D, G, K भवेदेकोपि for भवत्येकोपि.

व्यासः

> शुचिक्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक् ।
> प्रमाणमेकोपि[1] भवेत्साहसेषु विशेषतः ॥

अनुभूतवाक् प्रायो दृष्टसत्यवचाः[2] ॥ निक्षेपादिष्वनाप्तमप्येकमाह कात्यायनः

> अभ्यन्तरस्थनिक्षेपे साक्ष्यमेकोपि वाच्यते ।
> अर्थिना प्रहितः साक्षी भवेदेकोपि[3] याचिते ॥

याचितं विवाहाद्यर्थमानीतम्[4]आभरणादिकं कुण्डलादि । पण्यविवादेप्येकमाह स एव

> संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
> एक एव प्रमाणं स विवादे तत्र कीर्तितः ॥

तेषां च स्वरूपमाह व्यासः

> धर्मज्ञाः पुत्रिणो[5] मौलाः कुलीनाः सत्यवादिनः ।
> श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥
> श्रोत्रिया न पराधीनाः[6] सूरयश्चाप्रवासिनः ।
> युवानः साक्षिणः कार्या ऋणादिषु विजानता ॥

---

1 C, K प्रमाणमेको भवति.

2 B, C, D, F, G, K ०सत्यवचनः.

3 The वीर० reads अभ्यन्तरस्तु निक्षेपे and the स्मृतिच० 'आभ्यन्तरस्तु'. The स्मृतिच० reads भवत्येकोपि दूतकः.

4 F, K नीतं for आनीतम्.

5 F पौत्रिणः for पुत्रिणः.

6 B, D, F न पदाधीनाः for न पराधीनाः.

नारदः ( ४. १५५ )

श्रेणिषु[1] श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः ।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥

वर्गिण आह कात्यायनः

लिङ्गिनः श्रेणिपूगाश्च वणिग्जातास्[2]तथापरे ।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः ॥
दासचारणमल्लानां हस्त्यश्वरथजीविनाम्[3] ।
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः ॥

विजातीयानाह[4] याज्ञवल्क्यः ( २. ६९ )

त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥

वर्ज्यानप्याह[5] स एव ( याज्ञवल्क्य २. ७०–७१ )

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥
पतिताप्तार्थ[6]संबन्धिसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥

निर्धूतः स्वजनैस्त्यक्तः । आदिशब्देन दासाद्याः । बृहस्पतिः

मातुः पिता पितृव्यश्च भार्याया भ्रातृमातुलौ ।
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥

---

1 B, C, D, F, K श्रेणीषु for श्रेणिषु.

2 अपरार्के and वीर० read वणिग्व्राताः.

3 C, G, H, K ०रथवाजिनां for ०रथजीविनाम्. अपरार्के and वीर० read हस्त्यश्वायुधजीविनाम् and प्रत्येकैकं समू०.

4 C, D, F, G, H, K विजातीयानप्याह.

5 A, E, M वर्ज्यानाह.

6 B, D, F, G, N पतितार्थाभिसंबन्धि०.

नारदः ( ४. १६१ )

अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् ।
[1]स्वयमुक्तिः स शास्त्रेषु न स साक्षित्वमर्हति ॥

कात्यायनः

साक्षिणां लिखितानां च निर्दिष्टानां च वादिना[2] ।
तेषामेकोन्यथावादी भवेत्सर्वे न साक्षिणः ॥

एतेषामपि क्वचित्साक्षित्वमाह नारदः ( ४. १८८ )

असाक्षिणो ये निर्दिष्टा दास[3]नैकृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेपि साक्षिणः ॥

असंभवे मनुः ( ८. ७० )

स्त्रिया[4]प्यसंभवे कार्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥

याज्ञवल्क्यः ( २. ७२ )

सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे ॥

अत्र स्त्रीसं[5]ग्रहणादीनां साहसत्वेपि पृथगुपादानं गुप्ततया क्रियमाणस्त्रीसं[6]ग्रहादिपरम् । उशनाः

दासोन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ।
एतेप्यनभिसंबद्धाः साहसे साक्षिणो मताः ॥

---

1 नारदस्मृति reads सूचीत्युक्तः स शास्त्रेषु.

2 व्यव. मा. and वीर० read वादिनां for वादिना and भेदात्सर्वे न साक्षिणः.

3 A, E, M नैष्कृतिकादयः for नैकृतिकादयः. नारदस्मृति and अपरार्क read नैकृतिकादयः. अपरार्क reads आश्रित्य for आसाद्य.

4 B, D, F स्त्रियाथ संभवे.

5 C, D, F, G, H, K स्त्रीसंग्रहादीनां.

6 C, D, F, G, H, K ०संग्रहपरम्.

अनभिसंबद्धा अपक्षपातिनः ॥ बृहस्पतिः

साक्षिणोर्थे[1] समुद्दिष्टान्सत्सु दोषेषु दूषयेत् ।
अदुष्टान्दूषयन्वादी तत्समं दण्डमर्हति ॥

वाद्यत्र प्रत्यर्थी । तत्समं विवादविषयीभूतद्रव्यसमम् । व्यासः

साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रेभिलिखितान्सर्वान् वाच्याः प्रत्युत्तरं तु ते ॥

पत्रे लिखितान्साक्षिदोषान्प्रतिलक्षीकृत्य तद्विषयं परिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः । स एव

प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कथंचन ।
अतोन्यथा भावनीयाः क्रियया प्रतिवादिना ॥
अभावयन्[2]दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम् ।
भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
तथैव[3] विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसत्त्वे[4] व्यवस्थितः ॥ इति ।

अतोन्यथा असंप्रतिपत्तौ । भावनीयाः अङ्गीकारयितव्याः । क्रियया प्रमाणेन । स्फुटं यथा स्यात्तथा[5]भावयन्नित्यन्वयः ॥ यत्तु

सभासदां दूषणं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यं न[6] साध्यं दोषवर्जनात् ॥ इति

---

1 स्मृतिच० reads साक्षिणोर्थिसमु० and वीर० reads साक्षिणोर्थी समुद्दिष्टान्. B, C, D, F साक्षिणोर्थसमुद्दिष्टान.

2 अपरार्क reads असाधयन् for अभावयन्.

3 B, C, D, F, H, K, N omit the words तथैव...व्यवस्थित इति अपरार्क and वीर० read जितः स विनयं दाप्यः.

4 A साक्षिसत्ये for साक्षिसत्त्वे. अपरार्क and परा. मा. read साक्षिसत्ये.

5 C, D तथा भावयन् for तथाभावयन्.

6 अपरार्क, स्मृतिच०, परा. मा. and वीर० read असाध्यम्. परा. मा. reads नान्यदिष्यते for दोष० and स्मृतिच० reads दोषवर्णनात्; while व्यव. मा. reads दोषदर्शनात्.

[1]तल्लोकावधारितासत्साक्षिविषयम् । प्रतिवादिना दोषाज्ञाने स एव

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढा[2]स्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥

गूढाः शास्त्रप्रदर्शनेन साक्षिवादात्पूर्वकाले वक्तव्या इत्यर्थः । अ[3]नन्तरं तु न वक्तव्या इत्याह बृहस्पतिः

ले[4]ख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥

उक्ता[5]न् उक्तवतः वक्तुमारब्धवत इत्यर्थः । आदिकर्मणि क्तः कर्तरि च ( पा. ३.४. ७१ )–इति कर्तरि क्तः ॥

अत्र दण्डमाह कात्यायनः

उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान् ।
[6]न च तत्कारणं ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥

साक्षिणां स्वदूषणपरिहाराशक्तावर्थी तं कुर्यादित्याह बृहस्पतिः

लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्यं न सि[7]ध्येत्तु याव[8]त्तन्न विशोधयेत् ॥

तल्लेख्यादिकम् ॥

कूटसाक्षिकर्तुर्दण्डमाह कात्यायनः

---

1 B, D, F ०वर्जनादिति तदा सत्वेन ( तत्त्वेन ? ) लोकेवधारितसाक्षिविषयम्.
2 N omits गूढास्तु...प्रदर्शनात्.
3 B, D, F, H अनन्तरं तु वक्तव्याः.
4 G लेख्ये दोषास्तु for लेख्यदोषास्तु.
5 D, F omit the words उक्तानुक्त०......कर्तरि क्तः; B, C, H, K, N omit वक्तुमारब्ध...कर्तरि क्तः.
6 परा. मा. reads स च तत्कारणं for न च &c.
7 F न सिध्येत.
8 C यावन्नात्र; H यावत्तत्र.

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥

निर्विषयं विवादविषयीभूतार्थरहितम् ॥

दुष्टसाक्षिणां[1] निश्चयोपायमाह नारदः ( ४. १९३–१९६ )

यस्त्वात्मदोषदुष्टत्वाद्[2]स्वस्थ इव लक्ष्यते ।
स्थानात्स्थानान्तरं गच्छेदेकैकं चा[3]नुधावति ॥
कासत्य[4]कस्माच्च भृशमभीक्ष्णं[5] निश्वसित्यपि ।
विलिखत्यवनिं पद्भ्यां बाहू वासश्च धूनयेत् ॥
भिद्यते[6] मुखवर्णोऽस्य ललाटं स्विद्यते तथा ।
शोषमागच्छतश्चौष्ठावूर्ध्वं तिर्यक् च वीक्षते ॥
त्वरमाण इवा[7]बद्धमपृष्टो बहु भाषते ।
कूटसाक्षी स विज्ञेयस्तं पापं[8] विनयेद्भृशम् ॥

साक्षिणां प्रश्नप्रकारमाह कात्यायनः मनुरपि[9] ( ८. ८७, ७९–८० )

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं[10] द्विजान् ।
उदङ्मुखान्प्राङ्मुखान्वा[11] पूर्वाह्णे[12] च शुचिः शुचीन् ॥

1 D, F °साक्षिनिश्चयो° for °साक्षिणां निश्चयो°.
2 नारद reads °भिन्नत्वात् for °दुष्टत्वात्.
3 A, C, E, G, H, K, M वानुधावति.
4 D काकत्य° for कासत्य°. नारद reads क्रामत्यनिभृतोकस्मात्.
5 F अभीक्ष्णे for अभीक्ष्णम्.
6 D, F विद्यते for भिद्यते.
7 नारद reads इवाकस्मादपृष्टो.
8 D omits पापं...पृच्छेदृतम्.
9 F, K, N omit मनुरपि.
10 वीर° reads ऋते द्विजान्.
11 A, E, M प्राङ्मुखांश्च for प्राङ्मुखान्वा.
12 B, D, F, G, H पूर्वाह्णे वा for पूर्वाह्णे च.

सभान्तः साक्षिणः सर्वा[1]नर्थिप्रत्यर्थिसंनिधौ ।
प्राड्विवाकोनुयुञ्जीत विधिनानेन सान्त्वयन् ॥
यद्द्वयोरनयोर्वेत्थ कार्येस्मिं[2]श्चेष्टितं मिथः ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥

गवाश्वादिविवादेषु विप्रतिपन्ना[3]र्थसान्निध्यमप्याह स एव

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च संनिधौ ।
प्रत्यक्षं चो[4]दयेत्साक्ष्यं न परोक्षं कथंचन ॥
अर्थस्योपरि कर्तव्यं तयोरपि विना क्वचित् ।
चतुष्पादेषु धर्मोयं द्विपदस्थावरेषु च ॥
तौल्यगणिममेयानामभावेपि हि वादयेत् ।
क्रियाकारेषु स[5]र्वेषु साक्षित्वं न त्वतो[6]न्यथा ॥

तयोरपि विना क्वचित् तयोर्वा[7]दिप्रतिवादिनोर्विनाप्यर्थसंनिधाने क्वचिच्चतुष्पादादिष्वित्यर्थः । तौल्यं तोलनयोग्यं सुवर्णादि । गणिमं गणनीयं नाणकादि । मेयं मानयोग्यं व्रीहिगोधूमादि । अभावेपि साध्यार्थसंनिधानाभावेपि । क्रियाकारेषु व्यवहारेषु ॥ वधरूपे विवादपदे साक्षिभाषणं शिवसंनिधावित्याह स एव

वधे चेत्प्राणिनां साक्ष्यं [8]वादयेच्छिवसंनिधौ ।
तदभावे तु चि[9]ह्नस्य नान्यथै[10]तत्प्रवादयेत् ॥

---

1 मनु॰ reads प्राप्तान् for सर्वान्.
2 D, F कार्येस्मिन्धिष्ठितम्.
3 H विप्रतिपत्त्यर्थं॰ for विप्रतिपन्नार्थं॰.
4 वीर॰ reads वादयेत् for चोदयेत्.
5 H पूर्वेषु for सर्वेषु.
6 A, B, C, D, E, M तत्त्वतो॰ for न त्वतो॰.
7 B, C, D, H तयोर्वादिनोर्विनाप्यर्थसंनिधाने; K तयोर्वादिनो विना अपि.
8 परा. मा. and वीर॰ read वादयेच्छवसंनिधौ.
9 G विप्रस्य for चिह्नस्य.
10 B, C, D, H, K नान्यथैव for नान्यथैतत्. स्मृतिच॰, परा. मा. and वीर॰ read नान्यथैव. B, D विवादयेत् for प्रवादयेत्.

तत्साक्षि[1]भाषणं वधचिह्नस्याभावे कार्यम् । अन्यथा वधचिह्नसद्भावे ॥ स एव

न कालहरणं कार्यं राज्ञा[2] साक्षिप्रभाषणे ।
महादोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥

नारदः ( ४. १९८ )

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान्विज्ञातार्थान्पृथक् पृथक् ॥

वसिष्ठः

समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नेनैवं[3] तत्कार्यं वक्तव्यं तु पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं यत्र साक्षिभिः ।
एकैकं वादयेत्तत्र विधिरेष प्रकीर्तितः ॥

मनुः ( ८. ११३, १०२ )

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥
ये व्यपेताः स्वकर्मभ्यः पर[4]पिण्डोपजीविनः ।
द्विजत्वमभि[5]वाञ्छन्ति तांस्तु शूद्रवदाचरेत् ॥ इति ।

---

1 B, D भाषणं च चिह्नस्याभावे; F चिह्नस्य भावे कार्ये.
2 F राज्ञां साक्षिप्रभाषणं for राज्ञा साक्षिप्रभाषणे.
3 अपरार्क reads विभिन्नैककार्यं for विभिन्नेनैव तत्कार्यं; परा॰ मा. and वीर॰ read यत्कार्यं for तत्कार्यम्.
4 B, C, D, F, G परपीडोपजीविनः for परपिण्डोपजीविनः.
5 B, D, F अभिकाङ्क्षन्ति for अभिवाञ्छन्ति.

अन्यथा ब्रुवतः सत्यं ते नश्यतीत्येवमादिप्रकारेणेत्यर्थः ॥ साक्षिवचनपरीक्षामाह[1] ।

देशकालवयोद्रव्यसंज्ञाज्ञातिप्रमाणता[2] ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

साक्षिणां[3] विप्रतिपत्तौ निर्णयमाह याज्ञवल्क्यः ( २. ७८ )

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥

साक्ष्यमङ्गीकृत्यानभिधाने दण्डमाह स एव ( याज्ञवल्क्य २. ७६ )

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा[4] सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेहनि ॥

सर्वं वृद्धिसहितम् । सदशबन्धकं दशमांशसहितम् । दशमांशो राज्ञा ग्राह्यः सवृद्धिकमृणमुत्तमर्णेन ग्राह्यमिति मिताक्षरायाम् ॥ जानतः साक्ष्यानङ्गीकारे दण्डमाह स एव ( याज्ञवल्क्य २. ८२ )

यः साक्ष्यं श्रावितोन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥

विवादपराजये यो दण्डस्तमष्टगुणं[5] दाप्यः । दण्डदानासमर्थस्तु ब्राह्मणो निर्वास्यः क्षत्रियादिः स्वोचितं कर्म कारयितव्य इति मिताक्षरायाम् ॥ मनुः ( ८. १०८ )

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥

---

1 B, D, F ०परीक्षोपायमाह for ०परीक्षामाह.
2 वीर० reads ०वयोजातिसंज्ञाद्रव्यप्रमाणतः and परा. मा. reads जाति for ज्ञाति. G जाति for ज्ञाति.
3 D, F साक्षिणः for साक्षिणाम्.
4 H omits राज्ञा... सदशबन्धकम्.
5 B, C, G, K तं दण्डमष्टगुणं; D यो दण्डमष्टगुणम्.

याज्ञवल्क्यः (२. ८०)

> उक्तेपि[1] साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः[2] ।
> द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः[3] ॥

नारदः (१. ६२)

> निर्णिक्ते[4] व्यवहारे तु प्रमाणमफलं भवेत् ।
> लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ॥

क्वचित्साक्षिणोनृतवचनानुज्ञां प्रायश्चित्तं चाह याज्ञवल्क्यः (२. ८३)

> वर्णिनां[5] हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
> तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥

शूद्रस्य प्रायश्चित्तमाह विष्णुः (विष्णुधर्मसूत्र ८. १७) शूद्रश्चैकाहिकं[6] गोदशकस्य ग्रासं दद्यात्—इति । ऐकाहिकमेकस्मिन्नहनि भक्षयितुं पर्याप्तम् ॥

## ॥ इति[7] साक्षिप्रकरणं समाप्तम् ॥ ६ ॥

## ॥ अथ दिव्यम् ॥ ७ ॥

तत्तु मानुषप्रमाणानिर्णीतार्थनिर्णायकम् । तच्च तत्कालकालान्तर-निर्णायकतया द्वेधा । तत्राद्यभेदानाह बृहस्पतिः

---

1 B, F read before उक्तेपि साक्षिभिः the verse वर्णिनां हि...द्विजैः and add शूद्रस्य प्रायश्चित्तमाह विष्णुः । उक्तेपि साक्षिभिः &c.

2 B, C, D, F, G, K गुणवत्तराः.

3 B, D, F add after साक्षिणः 'अनृतवदनानुक्षिणः' (?); G adds अनृतवादिनः

4 नारदस्मृति reads 'निर्णिक्तव्यवहारेषु'.

5 C, H, K वर्णिनो हि for वर्णिनां हि.

6 B, D, F ०श्चैकाहिकं; विष्णुधर्मसूत्र reads शूद्र एकाहिकम्.

7 A, F omit इति...समाप्तम्; C, G, H, K read इति साक्षिनिरूपणं for इति...समाप्तम्.

धटो[1]ग्निरुदकं चैव विषं कोशश्च पञ्चमम् ।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकाः[2] ॥
अष्टमं फालमित्युक्तं नवमं धर्मजं स्मृतम् ।

तत्राद्यानि पञ्च महाभियोग एवेत्याह याज्ञवल्क्यः ( २. ९५ )

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेभियोक्तरि ॥

शीर्षकस्थे पा[3]राजयिकदण्डभाजि ॥ पितामहः

सावष्टम्भाभियुक्तानां धटादीनि विनिर्दिशेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्[4]वेतानि योजयेत् ॥ इति ।

अवष्ट[5]म्भो निश्चयः। तेन कोशोवष्टम्भे शङ्कायां च भवति। कालिकापुराणे

परदाराभिशापे च चौ[6]र्यागम्यागमेषु च ।
महापातकशस्ते च स्याद्दिव्यं नृपसाहसे ॥
विप्रतिपत्तौ विवादेवर्णस्य स्थापने कृते ।
तत्रैव स्थापयेद्दिव्यं शिरःपूर्वं महीपतिः ॥
परदाराभिशापे च बहवो यत्र वादिनः ।
शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणात् ॥

अगम्याः परदारभि[7]न्नाः साधारणा वेश्याद्याः । शस्तेभिशस्ते । साहसं बलादन्यायः । अवर्णो निन्दा । शि[8]रो दण्डः । परदाररूपं

---

1 B, D घटो for धटो; F घटाग्नि० for धटोग्नि०; K घटोनिरुदकं.

2 A, C, G, H ०माषकः for ०माषकाः; D ०माषकम्; K समाषकः; F omits तप्तमाषकाः...नवमम्.

3 A पराजयिक० for पाराजयिक०.

4 A शङ्कास्वेव नियोजयेत् for शङ्कास्वेतानि योजयेत्.

5 B, C, F, K omit अवष्टम्भो निश्चयः.

6 H omits चौर्या...शापे च.

7 G परदाराभिन्नाः for परदारभिन्नाः.

8 B, C, D, F, K omit शिरो दण्डः.

विशेषणमविवक्षितं अभिशापस्यानुवाद्यत्वात् । एवं[1] बहव इत्याद्यपि । तेन वाद्यभावेपि सर्वाभिशापे[2] दिव्यं भवति । शुद्धिकारणादिति हेतुनिर्देशोप्येवं संगच्छते । विनापि शीर्षकं कुर्यान्नृपद्रोहेथ पातके ( याज्ञवल्क्य २. ९६ )—इति सामान्योक्तिश्च[3] ॥ नारदः[4]

राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च देयं दिव्यं शिरो विना ॥ इति ।

कालान्तरे निर्णायकं दिव्यं शपथः[5] ॥ तद्भेदानाह नारदः (४. २४८)

सत्यं[6] वाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥
स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा ।
अभियोगेषु सर्वेषु कोशपानमथापि[7] वा ॥
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणात्[8] ॥ (नारद ४. २५०) ।

कोशस्य कालान्तरनिर्णायकत्वेपि महाभियोगविषयतया आद्येषु पाठः । याज्ञवल्क्यः ( २. ९६ )

तुल्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः[9] ॥

---

1 C एवं च बहवः.

2 D, F ०भिशापेपि दिव्यं for ०भिशापे दिव्यम्.

3 G omits च after सामान्योक्तिः.

4 H reads after नारदः 'प्रायश्चित्तं चाह याज्ञवल्क्यः । वर्णिनो हि वधो ( the verse above ).

5 B, D, F शापः for शपथः.

6 D, F, G सत्यवाहन० for सत्यं वाहन०, K सत्यवाहन०.

7 B, K कोशयान० for कोशपान०; C कोशपात०.

8 नारद० read ०कारणे for ०कारणात् and दिव्यतत्त्व '०कारणाः'.

9 B, D, F वर्जयेत्.

अयं च विकल्पोभियोक्तु[1]रिच्छायामेव । तदनिच्छायां त्वभियोज्यस्यैव दिव्यम् ।

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥ इति

दिव्यतत्त्वे कात्या[2]यनीयोक्तेः ॥

अथाधिकारिव्यव[3]स्था । याज्ञवल्क्यः ( २. ९८ )

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥

स्त्री जातिवयोवस्थाविशेषानादरेण । षोडशाब्दावधिको बालः सर्वजातीयोपि । अशीतिवर्षाधिको वृद्धः । अत्र ब्राह्मणस्य वक्ष्यमाण[4]साधारणकाले तुलैव नियता । अग्न्यादिकाले तु तान्यपि भवन्ति । अत एव पितामहः

सर्वेषामेव वर्णानां कोशाच्छुद्धिर्विधीयते ।
सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विना[5] विषम् ॥ इति ।

कालिकापुराणे

वर्णान्त्यस्य सदा देयं माषकं तप्तहेमजम् ॥

नारदः

क्लीबान्नरान्सत्त्वहीनान्परितश्चार्दितान्तरान् ।
बालवृद्धातुरान्[6]स्त्रीश्च परीक्षेत घटे सदा ॥

---

1 B, C, D, F, K अभियोज्येच्छाया० for अभियोक्तुरिच्छाया०.

2 B, C, D, F, K कातीयोक्तेः.

3 A ०व्यवस्थाः for ०व्यवस्था.

4 B, D, F वक्ष्यमाणासाधारण० for वक्ष्यमाणसाधारण०.

5 B, C, D, F, G, K विषं विना for विना विषम्. मिता० and दिव्यतत्त्व read विषं विना.

6 वीर० reads क्लीबातुरान् सत्त्व० and ०र्दितान्नरान्.

पि. स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम् ।
धटकोशादिभिस्तासामन्तस्तत्त्वं[1] विचारयेत् ॥
नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखादीनां नाग्निकर्म[2] विधीयते ॥
न मज्जनीयाः[3] स्त्रीबाला धर्मशास्त्रविचक्षणैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥
निरुत्साहान्व्याधिक्लिष्टान्नार्तांस्तोये[4] निमज्जयेत् ।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥
साहसेष्यागतानेतान्नैव तोये निमज्जयेत् ।
न चापि हारयेदग्निं[5] न विषेण विशोधयेत् ॥ ( last four are नारद ४. २५५, ३१३–३१५ )

विष्णुः (=विष्णुधर्मसूत्र ९. २९ )

न श्लेष्मिणां[6] व्याधितानां भीरूणां श्वासकासिनाम्[7] ।

कात्यायनः

न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न कचित् ॥
तण्डुलैर्न नियुञ्जीत[8] व्रतिनं मुखरोगिणम् ॥

1 C, K अतस्तत्त्वं for अन्तस्तत्त्वम्.
2 C, K नाग्निकार्यम्.
3 नारद reads न मज्जनीयं स्त्रीबालम्.
4 A, E, H, M क्लिष्टांस्तांस्तोये न निमज्जयेत् for °क्लिष्टान्नार्तांस्तोये निमज्जयेत्.
5 F अग्निमविशेषे न शोधयेत्.
6 C, G, K श्लेष्मिकाणां; D, F श्लेष्मिकानाम्.
7 B श्वासकासिकानां.
8 C न तु युञ्जीत for न नियुञ्जीत.

व्रती पयोव्रतादिमान् । पितामहः

> मद्यपस्त्रीव्यसनिनां[1] कितवानां तथैव च ।
> कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥

नारदः ( ४. ३३२ )

> महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
> नास्तिके[2] दृष्टदोषे च कोशदानं विवर्जयेत् ॥

कात्यायनः

> अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् ।
> प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥
> तत्प्रसिद्धानि दिव्यानि समये[3] तेषु निर्दिशेत् ।

तत्प्रसिद्धानि धटसर्पादीनि ॥ दिव्यकारिणोशक्तौ प्रतिनिधिमाह दिव्य[4]तत्त्वे स एव

> देशकालाविरोधे[5] तु यथायुक्तं प्रकल्पयेत् ।
> अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥

अन्येन हारयेत्प्रतिनिधिना कारयेत् । विपर्यये दिव्यकारिणोसामर्थ्ये । युक्तं[6] प्रकल्पयेत् । [7]पूर्वं पित्रादिघातो महापापं वा कृतमिति निश्चये[8] कालान्तरे चार्थान्तरसंदेहेपि प्रतिनिधिद्वारैव दिव्यमाह स एव[9]

---

1 B, D, F व्यवसिनां for व्यसनिनाम्.

2 नारद reads नास्तिकव्रात्यदासेषु कोशपानम्.

3 मिता०, स्मृतिच०, वीर० read संशये for समये.

4 B, E, M दिव्यतन्त्रे.

5 G ०कालविरोधे.

6 B, C, F, K, N omit युक्तं प्रकल्पयेत्.

7 A, B, D, M read विपर्यये before पूर्वम्.

8 B निश्चये वा for निश्चये.

9 After स एव B, D, F add दिव्यप्रकरणे कात्यायनः.

मातापितृद्वि[1]जगुरुवृद्धस्त्रीबालघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्र[2]मदानां च मन्त्रयोगक्रियाविदाम् ।
वर्णसंकरजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेवं[3] प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव नि[4]युक्तानां साधूनां दिव्यमर्हति ।
न[5] सन्ति साधवो यत्र तत्र शोध्याः स्वकैर्नरैः ॥

स्वकैराप्तैः ॥

अथ कालः । पितामहः

चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
धटः सर्वर्तुकः प्रोक्तो वाति वाते विवर्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्तितः ॥
शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ॥

[6]विषे हेमन्तशिशिरयोरेवोपादानं कालान्तरस्याप्युपलक्षणं–वर्षे चतुर्यवा मात्रा (=नारद ४. ३२४ )–इत्याद्यग्रे वक्ष्यमाणत्वात् ॥ नारदः

कोश[7]स्तु सर्वदा देयस्तुला स्यात्सार्वकालिकी ॥

---

1 स्मृतिच०, दिव्यतत्त्व read ०द्विजगुरुबालस्त्रीराजघातिनाम्.
2 स्मृतिच० reads प्रशठानां for प्रमदानाम्.
3 वीर० reads निन्द्येष्वेवं प्रवर्तितः.
4 दिव्यतत्त्व reads प्रयुक्तानां for नियुक्तानाम्.
5 B, D, F न संनिधानसाधवः for न सन्ति साधवः.
6 C, K omit विषे before हेमन्त०.
7 C, B, D, F, G कोशं तु सर्वदा देयं (B, D देयः) for कोशस्तु सर्वदा देयः.

पितामहः

पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च घटो भवेत् ।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता[1] ॥
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलम् ॥ इति ।

एतानि[2] दिव्यान्यादित्यवारे कार्याणीति शिष्टाः ॥

अथ देशः । पितामहः

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटः सदा ।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ॥

नारदः ( ४. २६५ )

सभाराजकुलद्वारे देवायतनचत्वरे ॥ इति ।

कात्यायनः

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
प्रतिलोम[3]प्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः ॥ इति ।

नारदः

अदेशकालदत्तानि बहिर्वा[4]दिकृतानि च ।
व्यभिचारं सदार्थेषु कुर्वन्तीह न संशयः ॥ इति ।

---

1 A, E, M अभीप्सतां for अभीप्सता.

2 B, C, D, F, K एतानि च दिव्यानि for एतानि दिव्यानि.

3 D, F, K प्रतिलोम्य० for प्रतिलोम०.

4 अपरार्क, स्मृतिच० and वीर० read बहिर्वासकृतानि and वीर० reads व्यभिचारं सदर्थेषु.

अथ सर्वदिव्यसाधारणो विधिः । पितामहः

तत आवाहयेद्देवान्विधिनानेन[1] धर्मवित् ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
एह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
आवाह्य तु घटे[2] धर्मं पश्चादङ्गानि विन्यसेत् ॥

स एव

इन्द्रं पूर्वे तु[3] संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
कुबेरस्तु सुवर्णाभः अग्निश्चापि[4] सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
ईशानस्तु भवेद्रक्त[5] एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः ॥
धरो ध्रुवस्तथा सोम आपश्चैवानिलो नलः ।
प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥
देवेशेशानयोर्मध्य आदित्यानां तथार्यनम्[6] ।
धातार्यमा च मित्रश्च वरुणोंशो[7] भगस्तथा ॥

---

1 C, D, F विधिना तेन for विधिनानेन.
2 C घटं धर्मं for घटे धर्मम्.
3 B, F पूर्वं तु for पूर्वे तु.
4 B omits अग्निश्चापि सुवर्णभः.
5 F भवेद्रक्तं for भवेद्रक्तः.
6 मिता० reads तथा गणम् for तथायनम्.
7 B, D, F वरुणोंशौ for वरुणोंशो; मिता० and दिव्यतत्त्व read वरुणोंशुः and परा. मा. reads वरुणेशौ.

इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमस्तथा[1] ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः[2] ॥
इत्येते द्वादशादित्या नामभिः[3] परिकीर्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥
वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः[4] ।
अजैकपादहिर्बुध्न्यः[5] पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणुर्भवश्च[6] भगवान् रुद्रास्त्वेकादश स्मृताः ॥
प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
गगनस्पर्शनो[7] वायुरनिलो मारुतस्तथा[8] ॥
प्राणः प्राणेशजीवौ च मारुताः[9] सप्त कीर्तिताः ।
धटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ॥
एतासां देवतानां[10] च स्वनाम्ना पूजनं विदुः ।

---

1 B, D, F दशमः स्मृतः for दशमस्तथा.
2 H ०जघन्यतः for ०जघन्यजः.
3 दिव्यतत्त्व reads मनुना for नामभिः.
4 C omits महायशाः...भवश्च.
5 A अहिर्बुध्नः.
6 G भगश्च for भवश्च; परा. मा. reads भगश्च.
7 मिता० reads गगनः स्पर्शनः, वीर० reads पवनः स्पर्शनः and दिव्यतत्त्व reads श्वसनः.
8 B, C, D, F, H, K मरुतः for मारुतः.
9 G मरुतोष्टौ. स्मृतिच०, मिता०, परा. मा, दिव्यतत्त्व, वीर० read मरुतोष्टौ.
10 B, C, D, F, H, K देवतानां तु for देवतानां च.

भूषावसानं[1] धर्माय दत्त्वा[2] चार्घ्यादिकं क्रमात् ।
अर्घ्यादि[3] पश्चादङ्गानां भूषान्तमु[4]पकल्पयेत् ।
गन्धादिकां निवेद्या[5]न्तां परिचर्यां प्रकल्पयेत् ॥
चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ॥

हविश्चरुः । आज्यहविःसमिधां[6] संप्रतिपन्नदेवताकत्वान्मिलितानामेव होमः सान्नाय्ययोरिवेति दिव्यतत्त्वे गौडमीमांसकाः[7] । तन्न । आज्ये स्रुवेणावद्यतीति स्रुवस्य[8], चरौ सकृदुपस्तृणाति मध्यात्पूर्वार्धाच्च द्विर्हविषोवद्यति अभिघारयति हविरवत्तं चैषोवदा[9]नधर्म इत्याश्वलायनादिसूत्रात्स्रुचः[10], समित्सु सामर्थ्यात् हस्तस्येति भिन्नसाधनकत्वात्तन्त्रतानुपपत्तेः । सान्नाय्यहोमयोस्तु जुह्वा[11] एव साधनत्वाद्युक्ता तन्त्रतेति । स एव ।

यमर्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके ।
मन्त्रेणानेन सं[12]हितं तत्कार्यं च शिरोगतम् ॥

---

1 D, F भूमावसानं for भूषावसानम्.
2 C, K चार्घादिकं; H चार्थादिकम्.
3 B अर्घादि for अर्घ्यादि.
4 B, D, F भूषान्तरमुप० for भूषान्तमुप०.
5 मिता० and परा. मा. read नैवेद्यान्ताम्.
6 C ०समिधो for समिधाम्.
7 B, C, F, H, K ०मीमांसकः.
8 G स्रुवस्यचरौ for स्रुवस्य चरौ.
9 B, D, F अवदानं धर्मः for अवदानधर्मः.
10 A, C, G, H, M read स्रुवः for स्रुचः.
11 D, F जुह्वान एव for जुह्वा एव.
12 दिव्यतत्त्व reads सहितं कुर्यात्तस्य शिरोगतम्.

मन्त्रश्च[1] ( महाभारते आदिपर्वणि ७४. ३० )

आदित्यचन्द्रावनिलोनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ।। इति ।

नारदः

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।
श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ।।
सत्यसंधः शुचिर्दक्षः सर्वप्राणिहिते रतः ।
उपोषितश्चार्द्रवासाः[2] कृतदन्तानुधावनः ।।
सर्वासां देवतानां च पूजां कृत्वा यथाविधि ।। इति ।

याज्ञवल्क्यः ( २. ९७ )

सचैलं स्नातमाहूय सूर्योदय उपोषितम्[3] ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसंनिधौ ।।

पितामहोपि

एकरात्रोपोषिताय त्रिरात्रोपोषिताय[4] वा ।
नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे ।। इति ।

स एव

सद्भिः परिवृतो राजा एतां[5] शुद्धिं प्रपूजयेत् ।
ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिस्तु तोषयेत् ।।
एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् ।
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ।।

1 D, F omit च after मन्त्रः.
2 मिता० and दिव्यतत्त्व read शुद्धवासाः for आर्द्रवासाः and कुर्यात् for कृत्वा.
3 D उपोषितः for उपोषितम्; F उपोषिताः.
4 B omits त्रि...ताय. मिता० reads 'त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा.'
5 B, C, D, F, G, K शुद्धिमेतां for एतां शुद्धिम्.

## ॥ अथ घटविधिः ॥

पितामहः

विशालामुच्छ्रितां शुभ्रां घटशालां तु कारयेत् ।
यत्रस्थो[1] नोपहन्येत श्वभिश्चाण्डालवायसैः ॥
कपाटबीजसंयुक्तां परिचारकरक्षिताम् ।
पानीयादिसमायुक्तामशून्यां कारयेन्नृपः ॥

नारदः ( ४. २६४ )

खादिरं कारयेत्तत्र निर्व्रणं शुक्ल[2]वर्जितम् ॥
शुक्लखादिरवर्जितमित्यर्थः ॥

शांशपं तदभावे वा शालं[3] च कोटरैर्विना ।
अञ्जनं तिन्दुकी[4]सारं तिनिशं रक्तचन्दनम् ॥

माधवस्तु—अर्जुनस्तिलकोशोकस्[5]तिनिशो रक्तचन्दनः[6]—इति पपाठ ॥

एवंविधानि काष्ठानि घटार्थं परिकल्पयेत् ॥ (नारदः ४. २६५)

एवंविधानीत्यादीन्यन्यान्यपि यज्ञियान्यौदुम्बरादीनीति[7] मदनः ।

अत एव पितामहः

छित्त्वा तु यज्ञियं[8] वृक्षं यूपवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥

---

1 D, F, K यत्रस्था नोपहन्यन्ते ( K ०हन्येत ) for यत्रस्थो नोपहन्येत.
2 नारद and वीर० read शुष्कवर्जितम्.
3 B, D शालां for शालं. B, C, D, F, G, K वा for च after शालं.
4 B, D, F तिदुका० for तिन्दुकी०; F ०सारतिनिशं for ०सारं तिनिशम्.
5 B, D, F अशोकतिनिशौ for अशोकस्तिनिशः. परा. मा. reads तिमिशो for तिनिशो.
6 C ०चन्दनमिति for ०चन्दनः इति.
7 D, F omit इति before मदनः.
8 परा. मा. reads याज्ञिकं वृक्षं हेतुवन्मन्त्र०; वीर० reads यज्ञियं काष्ठं; स्मृतिच० has विधिवत् for यूपवत्.

मन्त्रः सौम्यो वानस्पत्य[1]श्छेदने जप्य एव च ।

यूपवत्—ओषधे त्रायस्वैनम् (वाज. सं. ४. १) इत्यादिमन्त्रपूर्वकम् । सौम्यवानस्पत्ययोर्जप[2]मन्त्रत्वेनादृष्टार्थत्वात्समुच्चयः । सौम्याः प्रसिद्धाः । वानस्पत्यो—वनस्पते शतवल्शो विरोह[3] (ऋ. सं. ३. ८. ११) । अस्य यूपवदित्यतिदेशा[4]त्सिद्धस्यैवानुवादः ॥ पितामहः

चतु[5]र्हस्ता तुला कार्या पादौ[6] कार्यौ तथाविधौ ।
अन्तरं तु तयोर्हस्तौ भवेद[7]ध्यर्धमेव च ॥

व्यासः

हस्तद्वयं निखेयं तु[8] पादयोरुभयोरपि ॥ इति ।

पितामहः

चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च ।
कटकानि च देयानि त्रिषु स्थानेषु यत्नतः ॥

स एव

शिक्यद्वयं समास[9]ज्य पार्श्वयोरुभयोरपि ।
प्राग[10]ग्रान्कल्पयेद्दर्भाञ्छिक्ययोरुभयोरपि ॥
पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥

---

1 D, F वानस्पत्यश्चन्दने for वानस्पत्यश्छेदने; G वानस्पत्यकेदने.
2 A, M जाप्यमन्त्रत्वेन for जपमन्त्रत्वेन.
3 A, B, F, M वरोह for विरोह.
4 B, D, F अतिदेशादेव for अतिदेशात्. A, H, M सिद्धस्य for सिद्धस्यैव.
5 B omits चतुर्हस्ता...रपीति पितामहः.
6 दिव्यतत्त्व reads 'पादौ चोपरि तत्समौ'.
7 मिता°, परा. मा, स्मृतिच° read भवेदध्यर्धमेव वा; अपरार्क reads 'अध्यर्ध एव वा'.
8 स्मृतिच°, वीर°, परा. मा. read 'तु प्रोक्तं मुण्डकयोर्द्वयोः'
9 दिव्यतत्त्व reads समासाद्य for समासज्य.
10 F omits प्रागग्रान्...भयोरपि.

नारदः ( ४.२७१–२७२ )

शिक्यद्वयं समासज्य धकटर्कटयोर्दृढम् ।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम्[1] ॥
धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ।
पिटकं[2] पूरयेत्तस्मिन्निष्टका[3]पांसुलोष्टकैः ॥

परीक्षाप्रकारमाह स एव

कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः ।
उदकं च प्रदातव्यं धटस्योपरि पण्डितैः ॥
यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ॥

साम्यार्थमवलम्बावाह[4] पितामहः

तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि ।
धटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ ।
मृन्मयौ सूत्रसम्बद्धौ धट[5]मस्तकचुम्बिनौ ॥

पितामहः

तोलयित्वा नरं पूर्वं तस्मा[6]त्तमवतार्य[7] तु ।
धटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥
तत आवाहयेद्देवान् विधिनानेन मन्त्रवित् ।
वादित्रतूर्यनिर्घोषैर्गन्धमाल्यानुलेपनैः ॥

1 F शिवां for शिलाम्.
2 A, H, M पीठकं for पिटकम्.
3 स्मृतिच० reads इष्टकाग्रावपांसुभिः; नारद reads इष्टकालोष्टपांसुभिः.
4 C, G अवालम्बावाह; K सामर्थ्यमवलम्बा०.
5 C धटामस्तक० for धटमस्तक०.
6 अपरार्क, स्मृतिच०, परा. मा., वीर० read पश्चात्तम् for तस्मात्तम्.
7 F अवतीर्य for अवतार्य.

नारदः

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥

याज्ञवल्क्यः ( २. १००–१०२ )

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय[1] ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं[2] मां तुलामित्यभिमन्त्रयेत् ॥

नारदः ( ४. २७६ )

समयैः परिगृह्याथ[3] पुनरारोपयेन्नरम् ।
निर्वाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥

समयैः[4] परिगृह्य शपथैर्नियम्य । तानाह विष्णुः ( विष्णुध. सू. १०. ९. )

ब्रह्मघ्नां ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ इति ।

पुनरारोहणकालेभिमंत्रणमाह[5] नारदः (=४. २७८–२७९; विष्णुध. सू. १०. १०–११)

---

1 G विमोचयेति for विमोचय.
2 B, D, F ०र्ध्वं तु for ०र्ध्वं माम्.
3 B, D, F परिमृज्य for परिगृह्य.
4 B, D, F समयैः for शपथैः.
5 D, F निमन्त्रणं for अभिमन्त्रणम्.

त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोयं मानवस्तोल्यते त्वयि
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
देवासुरमनुष्याणां सत्यैस्त्वमतिरिच्यसे[1] ।
सत्यसंधोसि भगवञ् शुभाशुभविभावने ॥
आदित्यचन्द्रावनिलोनलश्च द्यौर्भूमिरापो हृदयं यमश्च[2] ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥

इति ।

पितामहः

ज्योतिर्विद्ब्राह्मणः[3] श्रेष्ठः कुर्यात्कालपरीक्षणम् ।
विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥
साक्षिणो ब्राह्मणश्रेष्ठा यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोलुब्धा नियोक्तव्या नृपेण तु ॥
शंसन्ति साक्षिणः सर्वे[4] शुद्ध्यशुद्धी नृपे तदा ॥

विनाड्यः पलानि । दशगुर्वक्षरः प्राणः षट् प्राणाः स्याद्विनाडिका—इति स्मृतेः ॥ नारदः ( ४. २८३ )

तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥

वृद्धिरूर्ध्वगतिः । हानिरधोगतिः[5] । पितामहः

अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते ॥

---

1 D, F अतिरिष्यते ; H अतिरिच्यते.
2 B मनश्च for यमश्च; D धर्मश्च; F नमश्च.
3 B ब्राह्मणश्रेष्ठः for ब्राह्मणः श्रेष्ठः
4 B, D, F सर्व for सर्वे.
5 D omits हानिरधोगतिः.

अल्पत्वं सकृदमतिकृतत्वेन । यत्र तु शिरःस्थायिवचनेनैव[1] सकृदमतिकृतत्वनिश्चयः पापमात्रे च विप्रतिपत्त्या तद्दिव्ये[2] कृते समता तत्र दोषाल्पत्वासंभवात्पुनः करणम् । अत एव बृहस्पतिः

तत्समस्तु पुनस्तोल्यो वृद्धिगो[3] विजयी भवेत् । इति ।

पुनःकरणे कारणान्तरमाह कात्यायनः

शिक्यच्छेदे तुलाभङ्गे तथा चापि[4] गुणस्य वा ।
शुद्धेश्च[5] संशये चैनं परीक्षेत पुनर्नरम् ॥

व्यासः

कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा ।
रज्जुच्छेदेक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः ॥

इदं तु दृष्टकारणकभङ्गपरम् । आकस्मिकभङ्गादौ त्वशुद्ध एव

कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा[6] ।
रज्जुच्छेदेक्षभङ्गे[7] वा तथैवाशुद्धिमादिशेत् ॥ इति

स्मृत्यन्तरात् । कक्षं शिक्यतलम् । अक्षः स्तम्भोपरि स्थापितस्तुलाधारः । आवृत्तिस्तोलनमात्रस्य न साङ्गप्रयोगस्येति[8] प्राच्याः । एवं तु[9] वैगुण्यापरिहारात्साङ्गः प्रयोग आवर्तनीय इति मदनः ॥

1 B, D, F शिष्टावचनेनैव for शिरःस्थायिवचनेनैव.
2 B, D, F, G दिव्यकृते for तद्दिव्ये कृते; C, H विप्रतिपत्त्या च दिव्ये; K पापमात्रे च प्रतिपत्त्या च दिव्ये कृते.
3 B, C, D, F, K वर्धितो for वृद्धिगो; H वर्णितो.
4 G चाधिगुणस्य for चापि गुणस्य.
5 B, F शुद्धेस्तु for शुद्धेश्च; D शुद्धेस्य.
6 H omits धटकर्कटयो...तथैवाशुद्धि.
7 F च्छेदेक्षयो भागस्तथैवा° for च्छेदेक्षभङ्गे वा तथैवा°.
8 F न योगप्रयोगस्य for न साङ्गप्रयोगस्य.
9 A, M एवं वैगुण्या° for एवं तु वैगुण्या°.

अथ[1] प्रयोगः ॥ कर्ता शुभेह्नि पूर्वाह्णे[2] पूर्वोक्तान्यतमवृक्षसमीपे गत्वा–ओषधे त्रायस्वैनम् ( वाज. सं ४. १ ) इति मन्त्रेण वृक्षं छित्त्वा सोमो धेनुं गौतमः सोमस्त्रिष्टुप्[3] जपे विनियोगः । सोमो धेनुं ( ऋ. सं. १. ९१. २० ) । वनस्पते गाथिनो[4] विश्वामित्रो वनस्पतिस्त्रिष्टुप् जपे विनियोगः । वनस्पते शतवल्शो ( ऋ. सं. ३. ८. ११ )–इति जप्त्वा इन्द्रादिलोकपालान्प्रत्येकं नत्वा चतुर्हस्तदीर्घां[5] चतुरङ्गुलस्थूलां[6] चतुरस्रां मध्येन्तयोश्चतुरङ्गुलवृत्तां मध्य उपरिभागे तयोश्चाधोभागे च त्रिभिः कर्कटैः कटकैर्वा[7] युतां तुलां कुर्यात् । ततः सप्तहस्तां पञ्चहस्तां[8] वा चतुरङ्गुलोन्नतां वेदिं च कुर्यादिति केचित् । ततस्तस्यां शुचिदेशान्तरे वा चतुरस्रं षड्ढस्तं षड्ढस्ताधिकांशकृतचूडं स्तम्भद्वयं[9] हस्तद्वयं भूमौ निखेयम् । भूमेरुपरि हस्तचतुष्टयं चूडांशश्चाधिकः । स्तम्भान्तरं तु हस्तद्वयं सार्धहस्तं वा । तच्चूडयोर्मध्येधोभागे[10] लोहकर्कटकटकबडिशाद्याकारतुलावलम्बनयुतं काष्ठं निवेश्यम् । तस्मिंस्तुला[11] स्वोपरितनकर्कटबडिशादिनावलम्बिनी[12] प्रान्तयोश्च फलकद्वयं तिसृभिस्तिसृभी रज्जुभिर्बन्धनीयम् । तुलायाः प्राच्यां हस्तद्वयान्तरालं दक्षिणोत्तरयोः स्तम्भद्वयं[13] निखाय तयोरुप-

---

1 B, D, F add पितामहः before अथ प्रयोगः.
2 B omits पूर्वाह्णे.
3 C सौमस्त्रिष्टुप् for सोमस्त्रिष्टुप्.
4 D, F गाधिनो for गाथिनो.
5 C, H, K चतुर्हस्तां दीर्घां for चतुर्हस्तदीर्घाम्; G चतुर्हस्तां तुलां दीर्घाम्.
6 D चतुरङ्गुलां for चतुरङ्गुलस्थूलाम्; F omits चतु...स्थूलाम्.
7 C कण्टकैः for कटकैः. B, D omit ततः.
8 D, F omit पञ्चहस्ताम्. D, F वेदिं कुर्यात् for वेदिं च कुर्यात्.
9 B, F omit स्तम्भद्वयं...सार्धहस्तम् .
10 F मध्ये भागे for मध्येधोभागे.
11 C तुलास्थोपरि for तुलास्वोपरि.
12 B, F omit लम्बिनी...हस्तद्वयान्तरा.
13 D, F स्तम्भद्वये.

युत्तराङ्गं काष्ठं दद्यात् । तदेतत्तोरणम् । तच्च घटाद्दशाङ्गुलोच्चम् । एतादृशं[1] पश्चिमायामपि कार्यम् । तोरणाभ्यामधो लम्बमानौ मृन्मयौ सूत्रसंबद्धौ गोलकरूपावलम्बौ तुलाप्रान्तस्पृशौ कार्यौ साम्यज्ञानाय । फलकयोश्च प्रागग्रान् कुशाना[2]स्तृणीयात् । ततः कृतैकोपवासं शक्तौ महाभि[3]योगे कृतोपवासत्रयं रविवारे सूर्योदयोत्त[4]रं सचैलस्नातं शोध्यं कृतैकोपवासः प्राड्विवाकः प[5]श्चिमे शिक्य आरोप्य पूर्वशिक्ये पाषाणेष्टकामृदाद्यारोप्य समं तोलयेत् । तत्परीक्षामुदकप्रक्षेपादिना सत्यवादिनो विप्रा हेमकाराश्च कुर्युः । ततस्तोलनकाले येन संनिवेशेनोपविष्टं तत्संनिवेशज्ञानाय तादृशीं रेखां कृत्वा तमवतारयेत् । ततः शोध्यो देशकालौ संकीर्त्यात्मशुद्धिज्ञापनायामुकदिव्यं करिष्य इति संकल्प्य प्राड्विवाकमेकं चतुर ऋत्विजश्च वस्त्रादिना वृणुयात् । स्वस्तिवाचनाद्यपि कार्यमिति स्मार्तभट्टाचार्याः । प्राड्विवाकश्च प्राञ्जलिः सतूर्यना[6]दं

ओम् । एह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥ इति

एवं घटे धर्ममावाह्य पश्चादङ्गदेवता आवाहयेत् ॥ इन्द्रं विश्वा माधुच्छन्दस इन्द्रोनुष्टुप् इन्द्रावाहने विनियोगः । एवं सर्वत्र विनियोगः । इ[7]न्द्रं विश्वा० ( ऋ. सं. १. ११. १ ) इन्द्र इहागच्छेह तिष्ठेति पू[8]र्वं इन्द्रमावाह्य पीतं ध्यायेत् । यमाय सोमं यमो यमोनुष्टुप् ।

1 B, D, F एतादृशं च पश्चिमा० for एतादृशं पश्चिमा०.
2 B, D, F, G, K कुशांस्तृणीयात् for कुशानास्तृणीयात्.
3 C, G, K ०योगे वा कृतो० for ०योगे कृतो०.
4 G ०दयानन्तरं for दयोत्तरम्.
5 B, D, F पश्चिमशिक्ये.
6 C, K ०नाद ओमेत्येहि for ०नादमोमेह्येहि; G सन् तूर्यनाद०.
7 B, C, D, F, H, K add ओम् before इन्द्रं विश्वा.
8 B, D, F, H omit पूर्वं इन्द्र...तिष्ठेति (p. 64 l. 1).

य[1]माय सोमं० ( ऋ. सं. १०. १४. १३ ) यम इहागच्छेह तिष्ठेति दक्षिणे यममावाह्य श्यामं ध्यायेत् । त्वं नो वामदेवो वरुणस्त्रिष्टुप् । [2]त्वं नो अग्ने वरुणस्य० ( ऋ. सं. ४. १. ४ ) वरुणेहागच्छेह तिष्ठेति पश्चिमे वरुणमावाह्य [3]स्फटिकाभं ध्यायेत् । राजाधिराजाय ( तै. आ. १. ३१. ६ ) इति यजुषा कुबेर इहागच्छेह तिष्ठेति उत्तरे कुबेरमावाह्य सुवर्णव[4]र्णं ध्यायेत् । [5]अग्निं मेधातिथिरग्निर्गायत्री । ओमग्निं दूतं० ( ऋ. सं. १. १२. १ ) अग्ने इहागच्छेह तिष्ठेति आग्नेये अग्निमावाह्य सुवर्णवर्णं ध्यायेत् । [6]मो षु णो घोरः [7]कण्वो निर्ऋतिर्गायत्री । मो षु णो० (ऋ. सं. १. ३८. ६) इहेत्याद्यावाह्य श्यामं ध्यायेत् । तव वायो व्यश्वो वायुर्गायत्री । [8]तव वायो० (ऋ. सं. ८. २६. २१ ) इहेति पूर्ववत् धूम्रं ध्यायेत् । तमीशानं गौतम ईशानो जगती । [9]तमीशानं० ( ऋ. सं. १. ८९. ५ ) इहे[10]त्यावाह्य रक्तं ध्यायेत् ॥ इन्द्राद्दक्षिणतः ज्मया अत्र वसवो मैत्रावरुणो वसिष्ठो वसवस्त्रिष्टुप् । ज्मया अत्र वसवो० (ऋ. सं. ७. ३९. ३) इहागच्छतेह तिष्ठतेत्यष्टौ वसून् ।

धरो ध्रुवस्तथा सोम आपश्चैवानिलोनलः ।
प्रत्यूषश्च प्रभा[11]सश्च वसवोष्टौ प्रकीर्तिताः ॥

---

1 C, G, K add ओम् before यमाय सोमम्.
2 C, G, K add ओम् before त्वं नो अग्ने.
3 C स्फाटिकाभं for स्फटिकाभम्.
4 B, C, D, F, G स्वर्णाभं for सुवर्णवर्णम्.
5 D अग्निर्मेधा० for अग्निं मेधा०.
6 D, F, G, K add ओम् before मो षु णो.
7 G काण्वो for कण्वो.
8 C तवा वायो for तव वायो.
9 F, D, G, K add ओम् before तमीशानम्.
10 B, F omits त्यावाह्य...तिष्ठते (l. 15).
11 D प्रभावश्च for प्रभासश्च; F प्रभाषश्च.

इन्द्रेशानयोर्मध्ये त्यान्नु सांमदो मत्स्यो द्वादशादित्या गायत्री । [1]त्यान्नु क्षत्रियान् ( ऋ. सं. ८. ६७. १ ) इत्यादि द्वादशादित्यानावाह्य ।

धातार्यमा च मित्रश्च वरुणोंशो भगस्तथा ।
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमस्तथा[2] ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।
इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ॥

अग्नेः पश्चिमे आ रुद्रासः श्यावाश्व एकादश रुद्रा जगती [3]आ रुद्रासः० ( ऋ. सं. ५. ५७. १ ) इहेति रुद्रानावाह्य ।

वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः[4] पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणु[5]र्भवश्च भगवान् रुद्रा एकादश स्मृताः ॥

यमनिर्ऋतिमध्ये [6]ब्रह्म जज्ञानं गौतमो वा[7]मदेवो ब्रह्मा त्रिष्टुप् ब्रह्म जज्ञानं० ( वाज. सं. १३. ३ ) इहेत्यादि ब्रह्माणमावाह्य । [8]गौरीर्मिमायेत्यस्य दीर्घतमा उमा जगती गौरीर्मिमाय० ( ऋ. सं. १०. १६४. ४१ ) मातर इहागच्छतेह तिष्ठतेति मातॄरावाह्य ।

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥

1 B, D, F add ओम् before त्यान्नु.
2 D, F दशमः स्मृतः for दशमस्तथा.
3 B, F, G add ओम् before आ रुद्रासः.
4 A अहिर्बुध्नः for अहिर्बुध्न्यः.
5 B भर्गश्च for भवश्च; C, D, F, G, K भगश्च for भवश्च.
6 B, D, F omit ब्रह्म जज्ञानं...वाह्य.
7 H वासुदेवो for वामदेवो.
8 C, G, H, K omit गौरीर्मिमायेत्यस्य...मिमाय (l. 15).

निर्ऋतेरुत्तरतो गणानां त्वा गृत्समदो गणाधिपतिर्जगती [1] [2] गणानां त्वा० (ऋ. सं. २. २३. १) इहेत्यादि गणेशम् । वरुणादुत्तरे मरुतो यस्य राहूगणो मरुतो गायत्री [3] मरुतो यस्य० (ऋ. सं. १. ८६. १) इहेत्यादि मरुतः ।

गगनस्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च [4] मरुतः सप्त कीर्तिताः ॥

धटादुत्तरे जातवेदसे कश्यपो दुर्गा त्रिष्टुप् जातवेदसे० (ऋ. सं. १. ९९. १) इहेति दुर्गाम् ॥ एवमेता देवता आवाह्य पूजयेत् । [5] ओं धर्मायार्घ्यं प्रकल्पयामि नमः इत्यादिप्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटकादिभूषान्तं धर्माय दत्त्वा इन्द्रादीनां प्रणवाद्यैः स्वस्वनामभिश्चतुर्थ्यन्तनमोन्तैर[6]र्घ्यादिभूषणान्तं पदार्थानुसमयेन दत्त्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यानि दध्यपूपाक्ष[7]तादि च दत्त्वा इन्द्रादीनां गन्धादीनि [8] पूर्ववद्दद्यात् ॥ [9] गन्धपुष्पादीनि च धटे धर्मपूजायां च रक्तानि कार्याणि । इन्द्रादीनां यथालाभम् । एतदन्तं प्राड्विवाकः कुर्यात् । ततश्चतुर्भिर्ऋत्विग्भिश्चतसृषु दिक्षु लौकिकाग्निस्थापनादिपूर्वं होमः कार्यः । तत्र सप्रणवां

1 A, D, F गणानां गृत्समदो.

2 D, F, K add ओम् before गणानाम्.

3 D, C, F, K read ओम् before मरुतो.

4 B, C, D, F, G, K मरुतोष्टौ for मरुतः सप्त.

5 B तत्र धर्माय; D, F तत्र ओं धर्माय; A, G, K, M omit ओं before धर्माय.

6 C अर्घादि for अर्घ्यादि; B अर्घ्याभूषान्तं for अर्घ्यादिभूषणान्तं; D भूषान्तं for भूषणान्तम्. A, M चतुर्थ्यन्तैः for ०र्थ्यन्तनमोन्तैः.

7 B, C, D, F, K ०क्षतानि for ०क्षतादि.

8 D, F मधुपूर्ववत्.

9 B, D, F omit गन्धपुष्पा...कुर्यात् (l. 15).

गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं[1] प्रणवमुच्चार्य आज्यचरुसमिधः प्रत्येकमष्टोत्तरशतं[2] सवित्रे जुहुयुः । ततोभियुक्तमर्थं पत्रे लिखेदभियुक्तः ।

आदित्यचन्द्रावनिलोनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्[3] ॥ इति

( महाभारते आदि. ७४. १६ ) मन्त्रं च लिखेत् । तत्र पत्रं संशोध्याभियुक्तशिरोगतं कुर्यात् । इदं च धर्मावाहनादि शिरःपत्रदानान्तं सर्वदिव्यसाधारणम् । ततः प्राड्विवाको घटमभिमन्त्रयेत्

त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।
धकाराद्धर्मभूतस्त्वं[4] टकारात्कुटिलं नरम् ॥
धृतो भावयसे[5] यस्माद्धटस्तेनाभिधीयसे ।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ॥
त्वमेव सर्वं जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोयं मानुषः शुद्धिमिच्छति ॥
तदेनं[6] संशयादस्माद्धर्मतस्त्रातुमर्हसि[7] ॥ इति

मन्त्रेण । ततोभियुक्तः

त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता[8] ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥

---

1 D, F ०कारान्तः for ०कारान्तं.
2 G ०शतमर्काय for ०शतं सवित्रे.
3 B, D, F सत्त्वमिति for वृत्तमिति.
4 मिता०, अपरार्क, स्मृतिच०, वैजयन्ती read धर्ममूर्तिः.
5 C भावयते for भावयसे. दिव्यतत्व reads धारयसे.
6 B, D, F तदेवं.
7 D, F अर्हतीति for अर्हसीति.
8 D, F, K देवविनिर्मिता for देवैर्विनिर्मिता.

यद्यहं पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत्[1] ॥ (याज्ञवल्क्य. २. १०१–१०२)

ततः प्राड्विवाकः शिरोगतपत्रकमभियुक्तं यथास्थानं[2] यथासंनिवेशं च घटमारोप्य पञ्चपलकं तथैव तत्र स्थापयेत्[3] । तस्मिंश्च काले शुद्ध्यशुद्धी परीक्ष्य शुचिभिर्ब्राह्मणै राज्ञे सभ्येभ्यश्च निवेदनीये[4] इति । ततस्ततोवतीर्य प्राड्विवाकब्रह्मर्त्विजो यथाविभवं दक्षिणाभि[5]स्तोषयेत् । ततो देवताः उत्तिष्ठ ब्रह्मणस्पते (ऋ. सं. १. ४०. १) यान्तु देवगणाः[6] इति विसृज्य सर्वं प्राड्विवाकाय समर्पयेत् ॥

1 B, C, D, F, G, K मामिति तुलामधिमन्त्रयेत्.

2 F omits यथास्थानम्.

3 B, D, F read after स्थापयेत्–पलं च षष्टिगुर्वक्षरोच्चारमितः कालः । तद्यथात्माकांते (मा त्वं कान्ते?) पक्षस्यान्ते पर्याकाशे स्वाप्सीः । कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रौत्रौ (रात्रौ?) चेत् भुत्थाम (क्षुत्क्षामः?) प्राटन्नेटः (?) (प्राटंश्चेतः?) खेटो राहुः प्राद्यात्क्रूरस्तस्माद् ध्वान्ते हर्म्यस्यान्ते शय्यैकान्त (न्ते?) कर्तव्या.

4 After निवेदनीये B, D, F read तल्लक्षणं च पितामहः–साक्षिणो ब्राह्मणाः श्रेष्ठाः यथादृष्टार्थवादिनः । ज्ञानिनः शुचयोलुब्धा नियोक्तव्या नृपेण तु ॥ शंसन्तु साक्षिणः सर्वे शुद्ध्यशुद्धी नृपे तदा । इति । शुद्ध्यशुद्धिनिर्णयहेतुश्च । तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः । समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥ वर्धेत ऊर्ध्वः स्यात् । हीयमानः अधोगामी इत्यर्थः । तेन मन्त्रलिङ्गाविरोधः । तत्र समत्वे सकृदमतिपूर्वतेता (?) स (अ?) दोषता । हीनत्वे सकृन्मतिपूर्वत्वे न बहुदोषतेति विवेकः । यदा त्वसति दृष्टकारणे शिक्यतररज्जुच्छेदौ तुलाकर्कटपादस्तम्भोत्तरङ्गादीनां भङ्गश्च तदाप्यशुद्धता । यदा तु दृष्टकारणकौ एषां भङ्गच्छेदौ तदा पुनरारोपयेत् । ततस्ततोवतीर्य &c. This passage is very corrupt in the three Mss. I have not noted all these corrupt readings.

5 D, F, K दक्षिणादिभिः for दक्षिणाभिः.

6 B, D, F add सर्वे after देवगणाः.

## ॥ अथाग्निविधिः ॥

पितामहः

अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम् ।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा ॥
आग्नेयं मण्डलं चाद्यं[1] द्वितीयं वारुणं तथा ।
तृतीयं वायुदैवत्यं[2] चतुर्थं यमदैवतम् ॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा ॥
नवमं सर्वदैवत्यमिति वेदविदो विदुः ।

मदनस्तु—अष्टमं सर्वदैवतम् । पुरस्तान्नवमं यत्तु तन्महत्पार्थिवं विदुः ॥ गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि[3] च—इति पपाठ ॥ मण्डलानां परिमाणमाह स एव (=नारद ४. २८५–२८६)

द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ॥
अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ।
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ॥

मण्डलान्मण्डलादेः । मण्डलभुवोन्तरालभुवश्च मिलित्वा द्वात्रिंशदङ्गुलानीत्यर्थः । तत्र षोडशाङ्गुलं मण्डलं मण्डलयोरन्तरालं च तावदेव । षोडशाङ्गुलकं[4] ज्ञेयं मण्डलं तावदन्तरम्—इति याज्ञवल्क्योक्तेः[5] (२. १०६) । यदि शोध्यपदं[6] षोडशाङ्गुलाधिकं तदान्तरालं[7]

---

1 D वार्धं for चाद्यम्.
2 B, D, F ०देवत्यं for ०दैवत्यं or दैवतम् everywhere.
3 G पर्युक्षितानि वेति.
4 H omits षोडशाङ्गुलकं...शोध्यपदम्.
5 B, D, F याज्ञवल्क्योक्तं for याज्ञवल्क्योक्तेः.
6 C शोध्यं पदं for शोध्यपदं.
7 B, D, H तदान्तरालं (D ०ले) षोडशाङ्गुलकं ज्ञेयं न्यूनमेव; F तदान्तराले षोडशाङ्गुलाधिकं तदान्तराले षोडशाङ्गुलकं ज्ञेयं (न्यू?) नमेव.

षोडशाङ्गुलन्यूनमेव भवति। यदि शोध्यपदं षोडशाङ्गुलादल्पं तद षोडशाङ्गुलमण्डलमध्ये पदपरिमाणमवान्तरमण्डलं कार्यम् ॥ यत्तु नारदः–एवं शतद्वयम् ( नारद ४. २८६ ) इत्यस्याग्रे चत्वारिंशत्समधिकं भूमेरङ्गुलमानतः–इति पपाठ तदष्टमनवममण्डलान्तरालभूभागं विहाय योज्यं तस्य गमनानर्हत्वात्। एवं चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना–इति कल्पतरूक्ते[1] पाठेप्याद्यमवस्थितिमण्डलं विहायाङ्गुलपरिमाणं[2] योज्यम् ॥

मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः।
विन्यसेच्च पदं तेषु कर्ता नित्यमिति स्थितिः ॥

मिताक्षरायां मदनरत्ने च–शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्। अयं च होमो[3]ग्नये[4] पावकाय स्वाहेति मन्त्रेण कार्य इति विज्ञानेश्वरः ॥ नारदः ( २. २८८–२८९ )

जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि।
दृष्टप्रयोगश्चान्यत्र तेनायोग्नौ प्रतापयेत् ॥
अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितम्[5]।

पितामहः

अस्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्[6]।
पिण्डं तु तापयेदग्नौ[7] पञ्चाशत्पलिकं समम् ॥

---

1 C, G कल्पतरूक्तेपि पाठे; K कल्पनसूक्तेपि पाठे.
2 E, G, M अङ्गुलं परिमाणं for अङ्गुलपरिमाणम्.
3 D, F अर्थवहोमो (?) for होमः.
4 B, D, F omit अग्नये before पावकाय.
5 नारद reads सुरक्तितम् for सुरक्षितम्; अपरार्क reads सुयन्त्रितम्; मिता° सुरञ्जितम्.
6 C adds by mistake five lines after अष्टाङ्गुलमयोमयं, which refer to शरक्षेप 'क्षत्रियस्तद्वृत्तिर्ब्राह्मणो वानायसाग्रान्...शरग्राही द्रुततरं तोरणं गत्वा'.
7 B, D, F वह्नौ for अग्नौ. K पातयेत् for तापयेत्.

कालिकापुराणे[1]

शतार्धपलिकं वृत्तं द्वादशाङ्गुलमायतम् ।
लौह[2]मग्निमयं ध्मातं देयं राज्ञाभि[3]शापिने ॥

शङ्खलिखितौ तु पिण्डस्य षोडशपलत्वमाहतुः—अथवा सप्ताश्वत्थपत्रान्तरितं षोडशपलम[4]ग्निवर्णं पिण्डमञ्जलिनादाय—इत्यादि । एतच्चाशक्तौ । तृतीयतापे तप्यन्तम् ( नारद ४. २९० )—इति नारदोक्तेस्त्रिवारं पिण्डः[5] संताप्यः । तत्र संताप्य जले क्षिप्त्वा[6] पुनः संताप्य जले क्षिप्त्वा पुनस्ताप्यमाने प्राड्विवाको धर्मावाहनादिशिरःपत्रारोपणान्तं कुर्यात् ॥ तत्र वह्नि[7]पूजायां विशेषमाह पितामहः

तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः ।
रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च ॥

हारीतः

प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः ।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥

शोध्य इति शेषः । पिता[8]महः

प्रथमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः ॥

---

1 B ०पुराणे तु; D, F पुराणेपि.

2 C, D, F लोह० for लौह०.

3 B, D, F अतिशापिने for अभिशापिने.

4 B ०वर्णमयं पिण्ड०; D, F अग्निमयं पिण्ड०.

5 D, F पिण्डं संतप्यं for पिण्डः संताप्यः.

6 F क्षिप्त्वा तु पुनः.

7 B, D, F धर्मपूजायां for वह्निपूजायाम्.

8 C, G, H, N omit पितामहः ...शुचिः. स्मृतिच० and अपरार्क read पश्चिमे for प्रथमे.

नारदः ( ४. ३०१ )

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि[1] तु ।
तान्येव पुनरालक्षेद्धस्तौ बिन्दुविचित्रितौ ॥

याज्ञवल्क्यः ( २. १०३ )

करौ विमृदितव्रीहेरङ्कयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥

तावदिति क्रियाविशेषणम् । तेन सप्तवारं वेष्टयेदिति विज्ञानेश्वरः । तावतां[2] सूत्राणां समाहारस्तावत्सूत्रं तेन सप्त[3]सूत्र्या सकृद्वेष्टयेदित्यर्थ इति मदनः ॥ पितामहः

सप्त पिप्पलपत्राणि अक्षतान्सुमनो दधि ।
हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा ॥

अत्र प्राड्विवाकस्य पिण्डस्थाग्न्यभिमन्त्राः प्रयोगे वक्ष्यन्ते ॥ याज्ञवल्क्यः ( २. १०४–१०५ )

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक[4] ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥
तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं[5] समम् ।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥

पितामहः

ततस्तं समुपादाय राजा धर्मपरायणः ।
संदंशेन[6] नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥

---

1 नारद reads काकपदानि.
2 D, F तावत्सूत्राणां for तावतां सूत्राणाम्.
3 B, C, D, F, G, K read तावत्सूत्रेण before सप्तसूत्र्या.
4 C पावकः for पावक.
5 D, F °पलिके समे for °पलिकं समम्.
6 C, K संशयेन for संदंशेन; F सन्दृशेन (?).

नारदः

हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।
स्थित्वैकस्मिंस्ततोन्यानि व्रजेत्सप्त त्वजिह्मगः ॥

पितामहः

त्वरमाणो न गच्छेत्तु स्वस्थो[1] गच्छेच्छनैः शनैः ।
न मण्डलान्यतिक्रामेन्नान्तरा[2] स्थापयेत्पदम् ॥
अष्टमं मण्डलं गत्वा[3] नवमे[4] निक्षिपेद्बुधः ॥ इति[5] ।

पिण्डस्तु संतृणे[6] नवममण्डले निक्षेप्यः

मण्डलानि तथा[7] सप्त षोडशाङ्गुलमानतः ।
तावदन्तरतो गच्छेद्गत्वा नवतृणे क्षिपेत् ॥ इति

कालिकापुराणात् ॥ पितामहः

ततस्तद्धस्तयोः[8] प्रास्येद्व्रीहीन्वा यदि वा यवान् ।
निर्विशङ्केन तेषां तु हस्ताभ्यां मर्दने कृते ॥
निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ॥

कात्यायनः

प्रस्खलत्यभियुक्तश्चेत्स्थानादन्यत्र दह्यते ।
न तद्दग्धं विदुर्देवास्तस्य भूयोपि दापयेत् ॥

---

1 G स्वस्थैर्गच्छेत्.
2 B, D, F मण्डलमतिक्रामेत्; C, K मण्डलं व्यतिक्रामेत्.
3 M कृत्वा for गत्वा.
4 C नवमं for नवमे.
5 B, D, F omit इति after बुधः.
6 G सतृणनवममण्डले.
7 C reads मण्डलानि ततस्तद्धस्तयोः प्रास्येत् for मण्डलानि तथा &c.
8 B, D, F omit ०स्तयोः प्रास्ये....तस्य वि (निर्दिशेत्).

याज्ञवल्क्यः ( २. १०७ )

अन्तरा [1]पतिते पिण्डे संदेहे वा पुनर्हरेत् ॥

अथ प्रयोगः ॥ पूर्वेद्युर्भूशुद्धिं विधाय परेद्युर्नव मण्डलानि कार्याणि । तत्राद्यं षोडशाङ्गुलं विधायाग्रे द्वात्रिंशदङ्गुलं भूभागं द्विधा विभज्य द्वितीयभागे गन्तृपदप्रमाणं द्वितीयं मण्डलं कार्यम् । अवशिष्टमन्तरालं भवति । एवमेव तृतीयाद्यष्टमपर्यन्तमन्तरालसहितं निर्वर्त्याग्रे षोडशाङ्गुलमन्तरालं[2] मुक्त्वा नवमम[3]परिमिताङ्गुलप्रमाणं कार्यम् । तथा चाष्टानां मण्डलानामन्तरालं च मिलित्वाङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं संपद्यते ॥

तिर्यग्यवोदराण्यष्टावूर्ध्वाग्रा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वि[4]तस्तिर्द्वादशाङ्गुलः ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥

वितस्त्याद्युत्तरत्रो[5]पयोक्ष्यते ॥ ततः पश्चिमादिषु नवसु मण्डलेष्वधिदेवताः क्रमेणाग्निं वरुणं वायुं यममिन्द्रं कुबेरं सोमं सवितारं सर्वदेवतांश्च संपूज्य मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधायाग्नये पावकाय स्वाहेत्याज्येनाष्टोत्तरशतं जुहुयात्प्राड्विवाकः शान्त्यर्थम् । ततस्तस्मिन्नग्नावस्रिरहितं वृत्तं श्लक्ष्णमष्टाङ्गुलायामं पञ्चाशत्पलसंमितमयःपिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादि हवनान्तं घटविध्युक्तमनुष्ठानकाण्डं कृत्वा तृ[6]तीये तापे वर्तमानेऽयःपिण्डस्थमग्निमभिमन्त्रयेदेभिर्मन्त्रैः प्राड्विवाकः

1 C पातिते पिण्डे.
2 F ०पर्यन्तमन्तरालं मुक्त्वा नवम०.
3 C, K नवमपरिमिता०; F ०परिमिताङ्गुलानां षट्पञ्चाशदधिकम्.
4 B, D, F वितस्तिर्द्वादशाङ्गुलम् for ०ङ्गुलः.
5 D, F उपयोज्यते for उपयोक्ष्यते.
6 D, F तृतीयतापे for तृतीये तापे.

त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे ।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥
जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् ।
पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे[1] ॥
पापेषु दर्शयात्मानमर्चिष्मान्भव पावक ।
अथवा शुद्धभावेषु शुद्धो[2] भव हुताशन ॥
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि[3] ॥ इति । ( last two are विष्णुध. सू. ११. ११–१२ )

लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः संताप्योदके निक्षिप्य पुनः संतापनं तृतीयतापः[4] । एवमभिमन्त्रितं सुतप्तमग्निवर्णमयःपिण्डं संदंशेन[5] गृहीत्वा प्राड्विवाक उपोषितस्य स्नातस्यार्द्रवाससः शिरोबद्धप्रतिज्ञापत्रस्य पश्चिमे मण्डले तिष्ठतो दिव्यकर्तुः पुरत[6] आनीय

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥ इति (याज्ञवल्क्य २. १०४)

दिव्यकर्त्राभिमन्त्रितं तस्य कृतसंस्कारयोर्हस्तयोर्निक्षिपेत् । कृतसंस्कारयोर्व्रीहीन्मर्दयित्वाञ्जलीकृतयोस्तिलकालकव्रणकिणादिस्थानेष्वलक्तकर-

1 C, D, G, F, K उच्यते for उच्यसे.
2 मिता० and अपरार्क read शीतः for शुद्धः, and वीर० reads शान्तः.
3 A, M omit इति after अर्हसि.
4 C, D, F, K तृतीयस्तापः.
5 F संदंशनेन for संदंशेन.
6 B परतः for पुरतः.

सादिनाङ्कयित्वा सप्त समान्यश्वत्थस्य पत्राणि अलाभेर्कपत्राणि सप्त शमीपत्राणि सप्त वा दूर्वापत्राणि अक्षतान्दध्यक्ताक्षतान्पुष्पाणि च विन्यस्य सप्तभिः शुक्लसूत्रैः सप्तकृत्वो वेष्टितयोस्ततो दिव्यकर्ता द्वितीयादीन्य[2]ष्टमान्तानि मण्डलानि तेष्वेव पदं निक्षिपन् सप्त पदानि शनैर्गत्वाञ्जलिस्थमयःपिण्डं न[3]वमे निक्षिपेत् । ततः पुनः कराभ्यां व्रीहीन् संघृष्यादग्धहस्तश्चेच्छुद्धो भवति ॥ [4]इत्यग्निदिव्यविधिः ॥

## ॥ अथ जलविधिः ॥

पितामहः

तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ।
मण्ड[5]लं धूपदीपाभ्यां कारयेत विचक्षणः ॥
शरान्संपूजयेद्भक्त्या वैणवं च धनुस्तथा ।
मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत् ॥

धूपदीपाभ्यां शरान्संपूजयेदित्यन्वयः । पूजा च मण्ड[6]ले कार्या ॥ धनुःपरिमा[7]णान्याह नारदः ( ४. ३०७ )

क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥
मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् ।
हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः ॥

---

1 B, C omit वा after सप्त.

2 B, C, F, G, K ०ष्टमान्तानि मण्डलेष्वेव पदम्.

3 C, K सतृणे नवमे निक्षिपेत्.

4 A, D, M omit इत्य...विधिः.

5 B ( by oversight ) reads मण्डलं धूपदीपाभ्यां शरान्पूजयेदित्यन्वयः. दिव्यतत्त्व reads मण्डपं for मण्डलम्.

6 D, F मण्डलं for मण्डले.

7 B, C, D, F, G, H, K धनुःपरिमाणाद्याह.

सप्तशतं सप्ताधिकशताङ्गुलम् । एवं षट्शतं पञ्चशतं च ॥ कात्यायनः

शरांश्चानायसाग्रांश्च प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥

नारदः

गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम्[1] ।
कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ ॥
गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय[2] प्रकुर्वीत पूजामादौ समाहितः ॥
ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्[3]बली ॥

पितामहः

स्थापयेत्प्रथमं तोये स्तम्भवत्पुरुषं नृपः ।
आगतं प्राङ्मुखं कृत्वा तोयमध्ये[4] तु कारिणम् ॥
ततस्त्वावाहयेद्देवान्सलिलं चानुमन्त्रयेत् ॥

देवान्धर्मादीन् । धर्मावाहनादि शिरःपत्रारोपणान्तं कुर्यादित्याद्यनुमन्त्रणमन्त्राः प्रयोगे द्रष्टव्याः । व्यासः ( =याज्ञवल्क्य २. १०८ )

सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥

कमुदकमभिशाप्याभिमन्त्रयेत्यर्थः । बृहस्पतिः

अप्सु प्रवेश्य पुरुषं प्रक्षिपेत्सायकत्रयम् ॥

1 B, C, D, F, G, H, K तोरणमण्डिते ( D, F ०मण्डितैः ).

2 C, G, H सतोरणाय कुर्वीत for वरुणाय प्रकुर्वीत.

3 B, D स्थाणुवद्वनी. नारद reads स्तम्भवत्.

4 C ०मध्येनुकारणम्; K मध्येनुकारिणम्.

पितामहः

क्षेप्ता तु क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥

कात्यायनः

क्षिप्तेषु मज्जनं कार्यं गमनं[1] समकालिकम् ॥

मज्जनसम[2]कालिकमित्यर्थः । नारदपितामहौ (नारद ४. ३०९–३१२)

शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥
मध्यमं शरमादाय पुरुषोन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥
आ[3]गतस्तु शरग्राही न पश्यति त[4]था जले ।
अन्तर्जलगतं सम्यक्तदा शुद्धं विनिर्दिशेत् ॥
अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वान्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥

एकाङ्गस्येति कर्णपरम् । तथा च कात्यायनः

शिरोमात्रं तु दृश्येत न कर्णौ ना[5]पि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥

पितामहः

शरस्य पतनं ग्राह्यं सर्पणं प[6]रिवर्जयेत् ॥

---

1 B, D, F मज्जनं समकालिकम्.

2 C मज्जनसमकालिकालिकमित्यर्थः.

3 F अगतस्तु.

4 नारद reads यदा जले । अन्तर्जलं यदा सम्यक् तदा शुद्धिम्.

5 D, F न च नासिका.

6 B, D, F सर्पणं परिवर्जयन्.

नारदः

> पञ्चाशतो[1] धावकानां यौ स्यातामधिकौ[2] जवे ।
> तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥

अथ प्रयोगः। जलस्थानं नदीसागरह्रदद्देवखातसरस्तडागादि स्थिरतोयं योज्यम् । अल्पमाहार्यतृणशैवालोर्मिपङ्कग्राहजलौका[3]मत्स्यादियुक्तं शीघ्रवेगमित्यादि वर्ज्यम् । तत्र नाभिदघ्ने जले यज्ञियवृक्षोद्भवा धर्मस्थूणा कार्या । तत्संनिधौ पश्चिमतीरदेशे शोध्यकर्णोच्छ्रितं तोरणं कार्यम् । तत्समीपे षडुत्तरशताङ्गुलं वैणवं[4] धनुरनायसाम्ना[5] वैणवास्त्रयः शराश्च स्थाप्याः । तोरणात्सार्धशतहस्तमिते[6] सुदेशे लक्ष्यं स्थाप्यम् । ततः सशरं धनुः श्वेतगन्धमाल्यादिभिः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मावाहनादि हवनान्तं पूर्वोक्तं निर्वर्त्य शोध्यशिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाको जलमभिमन्त्रयेदेवं

> तोय त्वं प्राणिनां प्राणः[7] सृष्टेराद्यं[8] तु निर्मितम् ।
> शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
> अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ॥ इति ।

ततः शोध्योपि—सत्येन माभिरक्ष त्वं वरुण (याज्ञवल्क्य २. १०८) इत्यभिमन्त्रयेत् । ततो[9]वष्टब्धधर्मस्थूणस्य प्राङ्मुखस्य नाभिदघ्नोदकावस्थितस्य बलीयसः पुरुषस्य समीपं गच्छेच्छोध्यः । ततो धनुःस्थानात्

1 D, F पञ्चाशतं धावकानाम्.
2 D, F अधिकौ यवौ for अधिकौ जवे.
3 A, B, C, D, F, K जलूक; G जलौक.
4 D, F वैणवे for वैणवम्.
5 B, C, D, F, H, K धनुरानीय साम्ना.
6 D, F ०मिते तु देशे.
7 C, F प्राणिनां प्राणाः.
8 D, F सृष्टेश्चमनुनिर्मिते.
9 B, D, F omits ततोव...धनुःस्थानात्.

क्षत्रियस्तद्वृत्तिर्ब्राह्मणो वानायसाग्रांस्त्रीन् शरान् लक्ष्यं प्रति सुदृढं[1] प्रक्षिपेत् । तत एकस्मिञ्जविनि पुरुषे मध्यमं शरं गृहीत्वा तस्य प्रसर्पणस्थानं विहाय पतनस्थाने स्थितेऽन्येन जविना शरमोक्षस्थाने तोरणमूले स्थातव्यम् । जवी च पञ्चाशतो धावकानां मध्ये जवाधिकः । ततस्तोरणमूलस्थितेन प्राड्विवाकेन करतालिकात्रये दत्ते तृतीयकरतालिकासमकालमेव शोध्यतोरणमूलस्थजविभ्यां मज्जनद्रुततरगमने कार्ये । मज्जनं चावष्टब्धधर्मस्थूणस्योरू गृहीत्वा कार्यम् । ततस्तस्मिन्मध्यमशरपातस्थानं गते तत्र स्थितः[2] शरग्राही द्रुततरं तोरणं गत्वा जलान्तर्गतं शोध्यं यदा पश्यति तदासौ शुद्धः । शिरोमात्रदर्शनेपि शुद्धो न कर्णाद्यङ्गान्तरदर्शने[3] निमज्जनस्थानादन्यत्र गते वा ॥ इत्युदकविधिः[4] ॥

## ॥ अथ विषविधिः[5] ॥

तत्र नारदः

दद्याद्विषं सोपवासो[6] देवब्राह्मणसन्निधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥
द्विजानां संनिधावेव दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः ॥

तत्परिमाणमाह[7] स एव

वर्षे[8] चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता ।
हेमन्ते सा सप्तयवा शरद्यल्पा ततोपि हि ॥ (नारद ४. ३२४)

---

1 C, D, F, H, K सुदृढं क्षिपेत्.

2 G तत्र स्थितम्.

3 C करणाद्यङ्गान्तर°.

4 A, H, M omit इत्युदकविधिः.

5 B, C, D, F, H, K विषदिव्यविधिः.

6 F सोपवासौ.

7 D, F omit तत्परिमाणमाह स एव.

8 नारद reads वर्षासु षड्यवा मात्रा ग्रीष्मे पञ्च यवाः स्मृताः । हेमन्ते सप्त वाष्टौ वा शरद्यस्यापि नेष्यते ॥

अल्पा त्रियवा । हेमन्तः शिशिरस्याप्युपलक्षकः तयोः समासश्रुतेः । वसन्तस्तु सर्वदिव्यसाधारण्येन प्राप्त[1] एव । तत्रापि सप्तयवा मात्रेति विज्ञानेश्वरः । विषं च त्रिंशद्गुणघृतयुतं देयं

पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम् ।
घृतेन योजितं सम्यक्[2]पिष्टं त्रिंशद्गुणान्वितम् ॥ इति

कात्यायनोक्तेः । विषाभिमन्त्रणमाह याज्ञवल्क्यः ( २. ११० )

विषं[3] त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मेमृतम् ॥

नारदः ( ४. ३२६ )

छायानिवेशितो रक्ष्यो दिनशेषमभोजनः ।
विषवेगक्र[4]मातीतः शुद्धोसौ मनुरब्रवीत् ॥

विषपरिमाणबाहुल्ये तु अवध्यन्तरमाह स एव

पञ्चतालशतं कालं निर्विकारो भवेद्यदा ।
तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम् ॥ इति ।

विषवेगाश्च विषतन्त्रे

वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेद[5]प्रवेपौ ।
यो वेगः पञ्चमोसौ [6]नयनविवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥

अत्र सोपवासेन प्राड्विवाकेन महादेवाग्रे विषं संस्थापितं भक्षयेदिति ॥

1 B ॰प्राप्तः स एव.
2 मिता॰, अपरार्क, वीर॰, दिव्यतत्त्व read श्लक्ष्णं for सम्यक् and अपरार्क and दिव्यतत्त्व read त्रिंशद्गुणेन.
3 याज्ञवल्क्य reads त्वं विष.
4 नारद reads क्रमातीतः.
5 H ॰प्रवेशौ for ॰प्रवेपौ.
6 The मिता॰, परा. मा. and वीर॰ read नयति विवशताम्.

## ॥ अथ कोशविधिः ॥

पितामहः

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।
समभावे तु देवानामादित्यस्य तु पाययेत् ॥
दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः ।
भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥

बृहस्पतिः

यद्भक्तः सोभियुक्तः स्यात्तद्देवायुधमण्डलम् ।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥

नारदः

तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् ।
आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम् ॥
पूर्वोक्तेन विधानेन स्नातमार्द्राम्बरं शुचिम्[1] ॥

नारदः

अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु ।
एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयम् ॥

अत्र सोपवासः प्राड्विवाकः पूर्वाह्णे देवमभ्यर्च्य तत्स्नानोदकं गृहीत्वा धर्मावाहनादि शिरःपत्रारोपणान्तं कृत्वा जलदिव्योक्तमन्त्रेण तज्जलमभिमन्त्रयेत् । शोध्योपि तदुक्तेनैवाभिमन्त्र्य भक्षयेदिति ॥

बृहस्पतिः

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रदृश्यते[2] ।
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥

1 D, F शुचिः for शुचिम्.
2 C नै दृश्यते for नै प्रदृश्यते.

## ॥ अथ तण्डुलविधिः ॥

तत्र[1] पितामहः ( =नारद ४. ३३७–३३९ )

तण्डुलानां प्रवक्ष्यामि विधिं लक्षणबोधितम् ।
चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥
तण्डुलान्कारयेच्छुक्लाञ्शालेर्नान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
आवाहनादि पूर्वं तु कृत्वा रात्रौ विधानतः ॥

कात्यायनोपि

देवतास्नानपानीयदिग्धतण्डुलभक्षणे[2] ।
शुद्ध[3]निष्ठीवनाच्छुद्धो नियम्योशुचिरन्यथा ॥

पितामहः ( =नारद ४. ३४२ )

शोणितं दृश्यते यस्य हनुस्तालु च शीर्यते[4] ॥
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

## ॥ अथ तप्तमाषविधिः ॥

पितामहः

तप्तमाषस्य वक्ष्यामि विधिमुद्धारणे शुभम्[5] ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृन्मयं वापि मण्डलम् ।
पूरयेद्घृततैलाभ्यां विंशत्या[6] च पलैस्तु तत् ॥

---

1 F, K omit तत्र before पितामहः.
2 F ०भक्षणैः for ०भक्षणे.
3 वीर० reads शुक्र for शुद्ध.
4 D, F, G, K शीर्यति for शीर्यते.
5 F शुभे for शुभम्.
6 D, F विंशत्यपिपलस्तु तद्.

सुवर्णमाषकं तस्मिन्सुतप्ते निक्षिपेत्ततः ।
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत् ॥
कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः[1] ॥

प्रकारान्तरमाह स एव ( =नारद ४. ३४४–३४८ )

सौवर्णे राजते ताम्रे आयसे मृन्मयेपि वा ॥
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ।
सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभिताम् ॥
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ।
भ्रमद्वीचितरङ्गाढ्ये अनखस्पर्शगोचरे ॥
परीक्षेतार्द्रपर्णेन चुरुकारं[2] सुघोषकम् ।
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ॥
परं पवित्रममृतं घृत त्वं यज्ञकर्मणि ।
दह पावक पापं त्वं हिमशीतं शुचौ भव ॥
उपोषितं ततः स्नातमार्द्रवाससमागतम् ।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां[3] तथा ॥
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ।
यस्य विस्फोटका न स्युः शुद्धोसावन्यथाशुचिः ॥

## ॥ अथ फालविधिः ॥

बृहस्पतिः

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥

1 वीर० and दिव्यतत्त्व read पितामहवचो यथा for निर्विकारकराङ्गुलिः.
2 C चरुकारं for चुरुकारम्.
3 D घृतमध्ये गताम्.

अग्निवर्णं तु तच्चौरो जिह्वया लेलिहेत्[1]सकृत् ।
न दग्धश्चेच्छुद्धिमि[2]यादन्यथा तु स[3] हीयते ॥

## ॥ अथ धर्मजविधिः ॥

पितामहः

अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥
राजतं कारयेद्धर्ममधर्मं सीसकायसम् ।
लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ ॥
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ।
सितपुष्पस्तु धर्मः स्यादधर्मोसितपुष्पधृक् ॥
एवंविधायोपलिप्य पिण्डयोस्तौ निधापयेत् ।
गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः ।
मृद्भाण्डकेनुपहते स्थाप्यौ चानुपलक्षितौ ।
उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ ॥
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ।
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ॥
यदि पापविमुक्तोहं धर्मस्त्वायातु मे करे ।
अभियुक्तस्ततश्चैकं प्र[4]गृह्णीताविलम्बितम् ॥
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ।
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥

1 स्मृतिच॰ and वीर॰ read लेहयेत्.
2 A, M शुद्धिमीयात् for शुद्धिमियात्.
3 C, H अन्यथा तु महीपते for अन्यथा तु स हीयते.
4 D, F प्रतीगृह्णीता॰ for प्रगृह्णीता॰.

बृहस्पतिः

पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्राद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा तु कुम्भे[1] तौ स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितम्[2] ॥
धर्मे गृहीते शुद्धः स्यात्संपूज्यश्च परीक्षकैः ॥

अथ प्रयोगः ॥ पत्रद्वये शुक्लं धर्मं कृष्णमधर्मं पुत्तलकरूपं विधाय [3]ओंह्रींक्रौंहंयंरंलंवंशंषंसंहंसो[4] धर्मस्य प्राणा [5]इह प्राणाः पुनरपीमं मन्त्रं पठित्वा[6] धर्मस्य जीव इह स्थितः पुनरपि तमेव पठित्वा धर्मस्य सर्वेन्द्रियाणि वाङ्मनोनेत्रश्रोत्र[7]घ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यनेनैव जीवदानं धर्मप्रतिमायाः कृत्वा गायत्रादिसामज्ञाने तेनैव नो चेत्सव्याहृतिप्रणवां गायत्रीं पठित्वा आवाहनादि कृत्वा यथाक्रमं शुक्ल[8]कृष्णपुष्पाभ्यां धर्माधर्मौ संपूज्य प्रणवेन पञ्चगव्यमादायाभ्युक्ष्य शुक्ल[9]पुष्पयुक्तं धर्मं कृष्णपुष्पयुक्तमधर्मं मृत्पिण्डद्वये कृत्वा नवे कुम्भे

1 दिव्यतत्त्व and वीर० read नवे कुम्भे for तु कुम्भे तौ.
2 B, C, D, F, G, H अविलम्बितः for अविलम्बितम्.
3 H omits ओं ह्रीं...हंसो.
4 B, D, F संहोंसों धर्मस्य; K षंहंसों धर्मस्य. M ०संहंसोहं धर्मस्य; दिव्यतत्त्व reads ०संहोंसो धर्मस्य.
5 M reads प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यनेन जीवदानं धर्मप्रतिमायाः कृत्वा गायत्र्यादिसामज्ञः पुनरपीमं मन्त्रं पठित्वा धर्मस्य जीव इह...गच्छतेह तिष्ठत स्वाहा.
6 H पठित्वा आवाहनादि कृत्वा धर्मस्य.
7 C omits श्रोत्र; F reads वाङ्मनो भृतिसेवा, omitting several pages upto भृतिः सेवा in दायनिर्णय.
8 E शुक्लकृष्णशुभाभ्याम्.
9 C शुक्लयुक्तं धर्मं कृष्णयुक्तमधर्मम्.

स्थापयेत् । प्राड्विवाकस्ततो धर्मावाहनादि हवनान्तं कर्म कृत्वा समन्त्रकप्रतिज्ञापत्रं संशोध्य शिरसि बध्नीयात् । शोध्यस्तु–यदि पापविशुद्धोहं धर्मस्त्वायातु मे करे[2]–इत्युच्चार्य कुम्भा[3]त्तयोरेकं गृह्णीयात् । धर्मे गृहीते शुद्ध इति । ततो दक्षिणां दद्यात् ॥

## ॥ अथ शपथाः ॥

मनुः ( ८. ११३ )

सत्येन शापयेद्विप्रं क्षत्रियं वाहना[4]युधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

बृहस्पतिः

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवब्राह्मणपादांश्च पुत्रदारशिरांसि च[5] ॥
एते च शपथाः प्रोक्ताः स्वल्पेर्थे सुकराः सदा ।
साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम् ॥
याज्ञवल्क्यः ( २. ११३ )
अर्वाक् चतुर्दशादह्नो यस्य नो राजदैवि[6]कम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥

घोरं महत् । स्वल्पस्य देहि[7]नामपरिहार्यत्वादिति मिताक्षरायाम् । कात्यायनोपि ।

---

1 D, E पापविशुद्धं धर्मस्त्वायातु; G पापविमुक्तोहम्.
2 B, C, D, F, G, K करमित्युच्चार्य.
3 M कुम्भान्तयोः.
4 D, E वाहनादिभिः for वाहनायुधैः.
5 D, E शिरांसि वा.
6 C राजदैविकः.
7 B, D, E देहिना परिहार्यत्वात्; C स्वल्पदेहिनामपरि०.

आचतुर्दशकादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथैः शुचिः ॥

व्यसनमापत् । घोरमतिपीडाकरम् । स्वल्पस्य शरीरधर्मत्वादिति वाचस्पतिमिश्रस्मार्तभट्टाचार्यौ ॥ पुनः कात्यायनः

अथ दैवविसंवादे द्विसप्ताहात्तु दापयेत्[1] ।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥
तस्यैकस्य न[2] सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥
ज्वरा[3]तीसारविस्फोटगूढास्थिपरिपीडनम् ।
नेत्ररुग्गलरोगस्तु तथोन्मादः प्रजायते ॥
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥

दैवविसंवादे ज्ञातिमरणादौ । तस्यैकस्येति तेन देशव्यापकमा[4]र्यादिव्यावृत्तिः ॥ अत्र तस्येत्यनेन पूर्वोक्ताभियुक्तपरामर्शादभियुक्तस्यैव रोगा[5]दिर्भङ्गलिङ्गं न तु तत्पुत्रादेः सोपि च महान्न स्वल्प इति प्रा[6]गेवोक्तम् । एतदभिप्रायेणैवाभियुक्तस्यासाधारणरोगादिर्भङ्गलिङ्गमित्यर्थ इति वाचस्पतिमिश्राः । अत एव ज्ञातिमरणमित्येवोक्तं न तु ज्ञातिरोगादिरिति ॥ ७ ॥

---

1 H reads दापयेत् । ज्वरातिसार० ( omitting some lines by oversight ).

2 D, E तस्यैकस्य न धर्मस्य.

3 A, M ज्वरातिसार०.

4 C मार्यादेर्व्यावृत्तिः; D, E मर्यादि०; H मर्यादाव्यावृत्तिः. K मर्यादादिव्या०.

5 B, D, E, H भगलिङ्गं for भङ्गलिङ्गम्.

6 B omits प्रागेवो...ज्ञाति०.

## ॥ [1]अथ दायनिर्णयः ॥ ८ ॥

अथ दायादिनिर्णयोपयोगि स्वत्वम् । तच्च क्रयप्रतिग्रहादिजन्यः शक्तिविशेषः । तत्कारणता तु क्रयादीनां लोकव्यवहारादेव गम्यते न शास्त्रात् । तदनभिज्ञानामपि तद्दर्शनात् । शास्त्रकल्पनायां गौरवाच्च । नयविवेके भवनाथोऽप्येवम् ॥ यत्तु गौतमः—स्वामी रिक्थक्रयसंवि[2]भागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रि[3]यस्य विजितं निर्विष्टं वैश्यशूद्रयोः (गौ. ध. सू. १०. ३९–४२)—इति तल्लोकसिद्धकारणानुवादकम् । स्वामिस्वत्वध्वंसमात्रेण यत्स्वं[4]स्य भवति तस्मिन् रिक्थमिति प्रयुञ्जते लोकाः । क्रयप्रतिग्रहादि व्याव[5]र्तयितुं मात्रपदम् । अत्र तादृशध्वंस एव रिक्थपदं [6]शक्तं क्रयादिस्वत्वोपायसमभिव्याहारात् । नागृहीतविशेषणान्यायाच्च ॥ पितरि जीवति तद्द्रव्ये पुत्रादीनां पूर्वमनुत्पन्नमेव स्वत्वं संविभागेन जन्यत इति धारेश्व[7]राचार्यः स्मृतिसंग्रहकारश्च । तन्न । उत्पत्त्यैवार्थस्वामित्वं [8]लभन्त इत्येवमादिवचनेन पुत्रोत्पत्तेरेव पितृधने पु[9]त्रत्वनिरूपितस्वत्वोत्पादकत्वबोधनात् ।

> भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च ।
> तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥ इति

1 A, B, C, D, E, K omit अथ दायनिर्णयः ; A reads अथ दायनिर्णयोपयोगि.
2 E ०संविभोग for ०संविभाग.
3 B, C, D, E, G, H, K, N विजितं क्षत्रियस्य.
4 B, D यत्स्वं भवति; E यत्संभवति.
5 B, C, D, E, G, H, K वारयितुं for व्यावर्तयितुम्.
6 B, D, E शक्यं for शक्तम्.
7 G, H, K धारेश्वराचार्याः.
8 G लभेत for लभन्ते.
9 B, C, D, E, G, K पुत्रनिरूपित०.

याज्ञवल्क्य[1]वचनाच्च (२. १२१)। न चेदं पितामहमरणस्यैव स्वत्वोत्पत्तिहेतुत्वं गमयति न पुत्रोत्पत्तेः। मरणकालेनुत्पन्ने पौत्रे तदभावप्रसङ्गात्। वस्तुतस्तु पितामहपदमविवक्षितम्। अन्यथा प्रपितामहाद्युपात्ते सदृशस्वाम्याभा[2]वप्रसक्तेः। अनुवाद्यविशेषणत्वाच्च ॥ यत्तु देवलः

पितर्युपरते पुत्रा विभजेयुर्धनं पितुः।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥ इति

तत्र पूर्वार्धं तावद्विभागकालविधायकं विधिप्रत्ययश्रवणात् उत्तरार्धं तु तस्यैव स्तुत्यर्थतयास्वातन्त्र्यपरं न तु स्वत्वाभावपरम् ॥ एतेन—न जीवति पितरि पुत्रा रिक्थं वि[3]भजेरन् यद्य[4]पि स्यात्पश्चादधिगतं तैरनर्हा एव पुत्रा अर्थधर्मपरेस्वातन्त्र्यात्—इति शङ्खवचोपि व्याख्यातम्। पूर्वनिषेधार्थवादार्थोनन्तरास्वातन्त्र्योक्तिरिति। यद्यपि तैः पश्चादधिगतमित्यन्वयः। तैः पु[5]त्रैः। पश्चादुत्पत्तेः। अधिगतं प्रतिग्रहादिना प्राप्तम्। पुत्रादिप्रतिगृहीते स्वत्वाविवादात्तत्राप्यस्वातन्त्र्यं किमुत पित्रर्जित इति तात्पर्या[6]र्थः ॥ इदं चास्वातन्त्र्यं विभागकाम्यधर्मव्यवसायादिविषयम्। अत एव हारीतः—जीवति पितरि पुत्राणामर्थादानविसर्गविभागाक्षेपेष्वस्वातन्त्र्यम्—इति। आदानविसर्गपदेन व्यवसायो लक्ष्यते। आक्षेपो दास्यादिभर्त्सनमिति मदनः ॥

यत्त

मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥ इति

1 C, G, K omit याज्ञवल्क्य before वचनाच्च.
2 E स्वाम्याभावाप्रसक्तेः.
3 B, C, D, E, G, K भजेरन् for विभजेरन्.
4 C यदि स्यात् for यद्यपि स्यात्. The स्मृतिच० and वीर० read यद्यपि स्वाम्यं पश्चात् &c. अपरार्क, स्मृतिच०, वीर० and परा. मा. read अर्थधर्मयोरस्वातन्त्र्यात्.
5 B, C, D, E, G पुत्रादिभिः for पुत्रैः.
6 D, E इति प्राप्तं तात्पर्यार्थः.

तत्कुण्डलाङ्गुलीयकधारणादावेव पितुः स्वातन्त्र्यमात्रार्थं न तु दानादौ न वा पुत्रोत्पत्तेः स्वत्वकारणत्वनिवृत्त्यर्थम्[1] । भोगानाश्यमण्याद्युपादानादप्येष एवार्थः प्रतीयते ॥ अत एव

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असंभूय सुतान्सर्वान्न दानं न च विक्रयः ॥ इति

दानविक्रयादीनामेव निषेधो न भोगस्य । अतः पूर्वमनेकभ्रात्रादीनामपरिच्छिन्नं स्वत्वं संविभागेन व्यवस्थाप्यते ॥ तत्र समुदितद्रव्यगतपूर्वस्वत्वनाशेन तदेकदेशे विलक्षणं तदुत्पद्यत इति केचित् । युक्तं तु पूर्वनाशस्वत्वान्तरोत्पत्तिकल्पने गौरवात्पूर्वमेकदेशस्थितमेवोत्पन्नं विभागेन पदार्थविशेषनिष्ठतया ज्ञाप्यते ॥ प्रकृतमुच्यते । ब्राह्मणस्याधिकं लब्धमिति प्रतिग्रहलब्धं विप्रस्याधिकं फलजनकमिति केचित् । रिक्थाद्यपेक्षया विप्रस्यैवायमधिक उपायः एवं क्षत्रियादेर्जयादिरिति तु युक्तम् । जयेपि जितस्य यत्र[2] गृहक्षेत्रद्रव्यादौ स्वत्वमासीत्तत्रैव जेतुरप्युत्पद्यते । जितस्य करग्राहितायां तु जेतुरपि सैव न स्वत्वम् । अत एव सार्वभौमेन संपूर्णा पृथ्वी माण्डलिकेन च मण्डलं न देयमित्युक्तं षष्ठे ( पूर्वमी. सू. ६. ७. ३ ) । संपूर्णपृथ्वीमण्डलस्य तत्तद्ग्रामक्षेत्रादौ स्वत्वं तु तत्तद्भौमिकादीनामेव राज्ञां तु करग्रहणमात्रम्[3] । अत एवेदानीन्तनपारिभाषिकक्षेत्र[4]दानादौ न भूदानसिद्धिः किं तु वृत्तिकल्पनमात्रमेव । भौमिकेभ्यः क्रीते तु गृहक्षेत्रादौ स्वत्वमप्यस्त्येव । तेन तत्र भूदानस्यापि फलं भवति ॥ निर्विष्टं कुसीदकृषिवाणिज्यपशुपालनलब्धं सेवालब्धं च । निर्वेशो[5] भृतिभोगयोः ( अमर. ३. ३. २१६ )—इत्यभिधा-

1 C, H, K ०निवृत्त्यर्थः for ०निवृत्त्यर्थम्.
2 D, E यत्र गृहे क्षेत्र० for यत्र गृहक्षेत्र०.
3 C, D, E, H, K करग्रहमात्रम्.
4 B, D, F क्षत्रदानादौ for क्षेत्रदानादौ.
5 N omits निर्वेशो...धानात्.

नात्। [1]भृतिः सेवा। भोगः कुसीदादिः। तत्राद्यं वैश्यस्य द्वितीयं शूद्रस्य। अतो लोकसिद्धैव क्रयादीनां कारणता॥ एवं च स्वीयगवादिजातवत्[2]सादौ स्वत्वव्यवहारः संगच्छते। उपायानां शास्त्रगम्यत्वे तु न स्यात्। स्वीयगवादिजननरूपोपायस्य शास्त्रेणाबोधनात्॥ [3]ननु स्वीयगवादिजननेनेव स्वभार्यायामुत्पत्त्या कन्यापुत्रादावपि स्वत्वं स्यात्। इष्टापत्तौ—विश्वजिति सर्वस्वं ददाति—इति विहिते सर्वस्वदाने कन्यापुत्रादिदानापत्त्या कन्यापुत्रादि न देयमिति [4]षाष्ठसिद्धान्तविरोधः (पूर्वमी. सू. ६. ७. १) इति चेन्न। गवादाविव भार्यायां स्वत्वाभावेन तस्यामुत्पन्ने[5]ऽपत्ये तदभावात् लोके च स्वत्वास्पदीभूतोत्पत्तेरेव स्वत्वकारणत्वं क्लृप्तम्। भार्यायामपि प्रतिग्रहेण स्वत्वं [6]स्यादिति चेन्न। क्षत्रियादीनां प्रतिग्रहाभावेन तद्भार्यासु स्वत्वाभावात्तदपत्येष्वपि तदभावः॥ तेन सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः (याज्ञवल्क्य २. १३३)—इति सजातीयस्यैव दत्तकस्य ग्राह्यत्वात्क्षत्रियादीन्प्रति तावद्दत्तकप्रतिग्रहो गौण एव न च विप्रान्प्रति स मुख्यः संभवति। तद्विधौ युगपद्वृत्तिद्वयविरोधात्। न च पुत्रप्रतिग्रहविधिर्विप्राधिकारिक एव न क्षत्रियाद्यधिकारिक इति वाच्यम्। दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते इत्यादिशौनकादिवचोभिस्तदधिकारिकत्वस्याप्यवगमात्। एवं ब्राह्म[7]विधिना क्षत्रियादिकन्यया सह विप्रस्योद्वाहे दानप्रतिग्रहयोर्गौणत्वमङ्गीकार्यम् अन्यत्र मुख्यत्वमिति वृत्तिद्वयविरोधः। क्षत्रियान्प्रति ब्राह्मादिविवाहप्रवृत्तिस्तु सर्वेषाम[8]वि-

---

1 C, N सेवा भृतिः.

2 E ०वत्सरादौ for ०वत्सादौ.

3 B, D, F न तु स्वीय० for ननु स्वीय.

4 B, D, E, F, H षष्ठसिद्धान्त०.

5 B, C, D, E, F, H, K अपत्येपि.

6 B, C, D, E, F, G, K स्यादेवेति for स्यादिति.

7 E ब्राह्मणविधिना for ब्राह्मविधिना.

8 D, F सर्वेषामतिप्रतिपन्नैव.

प्रतिपन्नैव । अत एव पुत्रादीनां दानं गौणमिति तत्वरत्ने मिश्राः ॥ न च स्वा भार्यापुत्रकन्या इति शाब्दव्यवहारात्स्वत्वकल्पना । तस्य स्वः पिता स्वा मातेत्यादाविव ज्ञातिवाचकत्वेनाप्युपपत्तेः ॥ अस्ति च ज्ञातावपि स्वशब्दस्य शक्तिः । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये [1]स्वो स्त्रियां धने–इति कोशात् ( अमरकोश ३. ३. २१२ ) ॥ यत्तु षष्ठे गर्भदासदानमुक्तं ( पूर्वमी. सू. ६. ७. ६ ) तच्चिन्त्यं तन्मातरि मुख्यदानप्रतिग्रहक्रयविक्रयाद्यभावेन स्वत्वाभावे तदुत्पन्ने गर्भदासे सुतरां तदयोगादित्यस्तु प्रासङ्गिकम् ॥

अथ दायः ॥ असंसृष्टं विभजनीयं धनं दायः । लाभाद्य[2]र्थसंसृष्टधनव्यावृत्तयेसंसृष्टमिति । वणिग्भिरेकीकृत्य विभज्यमाने दायभागशब्दाप्रयोगात् । एवं वक्ष्यमाणपारिभाषिकसंसर्गवतोपि निवृत्तिः । अत एव स्मृतिसंग्रहे

पितृद्वारागतं द्रव्यं मातृद्वारागतं च यत् ।
कथितं दायशब्देन तद्विभागोधुनोच्यते ॥ इति ।

निघण्टौ[3] च–विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः–इति । पितृपदं संबन्धिमात्रोपलक्षणम् ॥

अयं दायो द्वेधा[4] सप्रतिबन्धोप्रतिबन्धश्च । यत्र धनस्वामिनस्तत्पुत्रादेश्च जीवनं[5] प्रतिबन्धकं स सप्रतिबन्धो यथा पितृव्यादिधनम् । यत्तु स्वामिसंबन्धादेव पुत्रादेर्धनार्जनोपायान्तरनिरपेक्ष[6]त्वात्स्वत्वं भवति सोप्रतिबन्धः । यथा पितृधनम् । इति दायस्वरूपम् ॥

---

1 B, D, E, F स्वो स्त्रियो धने; A त्रिष्वात्मीये स्वं निजे धने.
2 C लाभाद्यर्थं संसृष्ट०.
3 D, E, D निघण्टौ वा.
4 E, F द्विधा for द्वेधा.
5 C जीवनं प्रतिबन्धः यथा पितृव्यादि०.
6 D, E, G निरपेक्षात्स्वत्वम्; F पुत्रादेर्धनोपायान्तरनिरपेक्षात्.

अथ तद्विभागः ॥ तमाह नारदः ( १६. १ )

विभागोर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते[1] ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥

पुत्रैरिति पौत्रादीनां[2]मुपलक्षणम् । पित्र्यस्येति पितामहादीनाम् । मदनस्तु पित्र्यादेरित्येव पपाठ । इदं च दायभागस्वरूपमुक्तम् ॥ द्रव्यसामान्याभावेपि त्वत्तोहं विभक्त इति व्यवस्थामात्रेणापि भवत्येव विभागः । बुद्धि[3]विशेषमात्रमेव हि विभागः । तस्यैवाभिव्यञ्जिकेयं व्यवस्था ॥

अथ विभागकालः ॥ मनुः ( ९. १०४ )

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन्पैतृकं रिक्थ[4]मनीशास्ते हि जीवतोः ॥

चशब्दोपादानेपि मरणसमुच्चयो न विवक्षितः । अत एव मदनरत्ने स्मृतिसंग्रहे

पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि ।
न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥
मातृद्रव्यविभागोपि तथा पितरि जीवति[5] ।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिः ॥

एतदपवदति बृहस्पतिः

पित्रोरभावे भ्रातॄणां विभागः संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥

---

1 F, H प्रकल्पते.
2 B, C, D, E, G, K पौत्रादीनामप्युप०.
3 D, F omit बुद्धि...विभागः.
4 G द्रव्यं for रिक्थम् .
5 F omits from जीवति several pages.

नारदः ( १६. २—३ )

अत[1] ऊर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम् ।
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृ[2]त्ते चापि रमणे पितर्युपरतस्पृहे ॥

रमणः कामः । उपरतस्पृहो विरक्तः । प्रत्तासु भगिनीषु चेति काकाक्षिवद्रजोरमणनिवृत्त्योर्विशेषणम् ॥ गौतमः ( २८. १–२ ) ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन् । निवृत्ते रजसि मातुर्जीवति पितरि चेच्छति–इति । इ[3]च्छतीत्यनेन रजोनिवृत्तिं विनापि पितुरिच्छया विभाग उक्तः ॥

क्वचित्तदिच्छां विनापि विभागमाह बृहस्पतिः

क्रमागते गृहक्षेत्रे पितापुत्राः समांशिनः ।
पैतृके न विभागार्हाः सुताः पितुरनिच्छया ॥

अर्थात्[4]पितामहाद्यर्जिते तदनिच्छयापि विभागार्हा इत्यर्थः ॥

पैतामहेपि क्वचित्पितुरिच्छयैव विभागमाहतुर्मनुविष्णू ( मनु. ९. २०९; विष्णुध. सू. १८. ४३ )

पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।
न तत्पुत्रैर्भजेत्साधमकामः स्वयमर्जितम् ॥

1 नारद reads पितर्यूर्ध्वं गते पुत्रा विभजेरन् धनं क्रमात्.

2 B निर्वृत्ते वापि मरणे; D निवृत्तेर्वापि मरणे; E निवृत्ते वापि मरणे; K निवृत्ते चापि मरणे. नारद reads वापि रमणे and so also विवादरत्नाकर. मदनपारिजात reads चापि रमणात्. वीर० reads वापि रमणात्; दायभाग reads विनष्टे वाप्यशरणे पित०.

3 G पितरि चेच्छतीत्यनेन.

4 F, G पैतामहाद्यर्जिते.

बृहस्पतिः

पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिनावाप्तं[1] तत्र स्वाम्यं पितुः स्मृतम् ॥
प्रदानं स्वेच्छया कुर्याद्भोगं चैव ततो धनात् ॥

नारदः

व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥

हारीतः—अकामे पितरि रिक्थभागो[2] वृद्धे विपरीतचेतसि दीर्घरोगिणि च—इति । अकामे विभागेच्छारहित इति मदनरत्ने । विपरीतचेता अधर्मवर्ती । पितुरनिच्छायामपि विभागो भवतीति भावः ॥

पितर्यसमर्थे ज्येष्ठपुत्रानुमत्या विभागमाह हारीतः—कामं दीने प्रोषिते आर्ति गते वा ज्येष्ठोऽर्थांश्चिन्तयेत्—इति । शङ्खलिखितौ—पितर्यशक्ते कुटुम्बस्य व्यवहारं ज्येष्ठः कुर्यात्तदनन्तरो वा कार्यज्ञस्तदनुमतेन—इति । अनन्तरोनुजः । कुटुम्बभरणादिसमर्थेच्छया विभागः[3] । सर्वेषां तथात्वे त्वनियम इति निष्कर्षः[4] ॥ याज्ञवल्क्यः (२. ११४)

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन[5] सर्वे वा स्युः समांशिनः ॥

---

1 E ०शौर्यादिना व्याप्तम्.

2 C रिक्थभोगो for रिक्थभागः. The मिता० and अपरार्क read रिक्थविभागः and मिता० reads रोगिणि.

3 B भागः for विभागः.

4 M निष्कृष्टोर्थः; A निष्कृष्टार्थः.

5 B, C, D, E, G, K, N ज्येष्ठभागेन.

ऐच्छिकविभाग एव विवृत उत्तरार्धेन । इच्छायाः संभवति उक्तपक्षद्वयावलम्बनत्वे[1] स्वातन्त्र्यायोगात् । वाक्यभेदापत्तेः । एकस्मै लक्षं[2] कस्मैचित्कपर्दिकामन्यस्मै[3] न किमपीत्यव्यवस्थापत्तेश्च ॥

ज्येष्ठविभागे विशेषमाह मनुः ( ९. ११२, ११६–११७ )

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
तदर्धं मध्यमस्य स्यात्तदर्धं[4] तु कनीयसः ॥
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ।
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं[5] ततोऽपरः ॥
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ।

यमलयोर्मध्ये प्रथमप्रसूतस्य ज्यैष्ठ्यमाह[6] मनुः ( ९. १२६ )

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव संज्ञासु[7] जन्मतो ज्येष्ठता मता ॥

यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
संतानः[8] पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् ॥ इति ।

यत्तु पिण्डसिद्ध्यादिवैद्यकग्रन्थे[9]नन्तरप्रसूतस्य ज्यैष्ठ्यमुक्तं तदनेन कार्यांशे बाध्यते तस्याः[10] श्रुतिमूलत्वात् । मासेन शूद्रीभवतीतिवत्[11] ।

---

1 B, D, F ०द्वयालम्भ ( म्ब? ) नत्वे; K, N द्वयालम्बनत्वे.
2 D omits लक्षं...अन्यस्मै.
3 A, C कपर्दिकं; B, F, G, K कपर्दकम्.
4 B, C, D, E तदर्धं तु.
5 G, H पुत्रोप्यर्धम्.
6 B, C, D, E, G, H, K मनुराह for आह मनुः.
7 The मनुस्मृति reads गर्भेषु for संज्ञासु.
8 C संजातः for संतानः.
9 D, E वैदिकग्रन्थे.
10 D, E तस्य श्रुति०.
11 A, B, C, D, E, M शुद्धिर्भवतीति.

यत्तु—द्वौ तदा भवतो गर्भौ सूतिर्वेश[1]विपर्ययात्—इत्यादिना भागवते पश्चाज्जातस्य ज्यैष्ठ्यमुक्तं तदप्यनेन बाध्यते । पुराणेषु स्मृतिविरुद्धाचाराणां बहुशो दर्शनात् । देशाचारतो व्यवस्था ज्ञेयेति केचित् । युक्तं तु पूर्वोक्तमेव ॥ अयं चोद्धार[2]विभागः कलौ नेष्टः[3] । कलिवर्ज्येषु पाठात् । निर्णीतं चेदं समयमयूखेस्माभिः ॥

पितुरंशद्वयमाह नारदः

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।

इदं त्वेकपुत्रपरम् । स यद्येकपुत्रः स्याद्द्वौ भागावात्मनः कुर्यात्—इति शङ्खलिखितोक्तेरिति मदनरत्ने । एकपदं श्रेष्ठपरम् । एके मुख्यान्यकेवलाः—इत्यमरोक्तेः ( अमरकोश ३. ३. १६ ) । गुणवत्पुत्र इति यावदिति पारिजाते ॥

पितामहार्जिते त्वेकपुत्रेणापि सह समांशित्वमाह बृहस्पतिः

द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥

याज्ञवल्क्यः ( २. १२१ )

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥

कात्यायनः

सकलं[4] द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः ।
पितरो भ्रातरश्चैव विभागो धर्म्य उच्यते ॥

---

1 A, M सूतिवेश०.
2 G अयमुद्धार०.
3 B, C, D, E, G, K, N कलौ निषिद्धः.
4 D, E सकलद्रव्यजातम्.

यत्तु याज्ञवल्क्यः (२. ११६) न्यूनाधिकविभक्तानां धर्म्यः[1] पितृकृतः स्मृतः—इति तत्र पितृकृतो धर्म्यश्चेत्स्मृतो[2] न परावर्तनीय इति मदनविज्ञानेश्वरादयः ॥ यदपि नारदः (१६. १५)

पित्रैव[3] तु विभक्ता ये समन्यूनाधिकैर्धनैः[4] ।
तेषां स एव धर्मः स्यात्सर्वस्य हि पिता प्रभुः ॥ इति

तद्युगान्तरपरम्[5] ॥

स्वस्य पुत्राणां च समांशपक्षे पत्न्या अप्यंशमाह याज्ञवल्क्यः (२. ११५)

यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण[6] वा ॥ इति ।

दत्ते त्वर्धं देयम् । दत्ते त्वर्धं प्रकल्पयेत्[7] (याज्ञवल्क्य २. १४८)—इति वचनात् । अर्धं पूर्वदत्तं[8] स्त्रीधनं यावता पुत्रांशसमं भवति तावदित्यर्थः । अंशाधिकधनायास्तु नांशः ॥

अर्जनसमर्थस्य पुत्रस्यानीहमानस्य[9] दायजिघृक्षाभावमाह[10] स एव (याज्ञवल्क्य २. ११६)

---

1 D, E, H धर्मः for धर्म्यः.
2 E धर्मश्चेत्स्मृतः; G धर्म्यश्चेच्छातो न परावर्तनीयः.
3 D, E पितृवत्तु विभक्ता ये.
4 नारद reads हीनाधिकसमैः.
5 C युगान्तरं for युगान्तरपरम्.
6 D, E, K श्वशुरेण च.
7 A, C, G, H, K omit वचनात् after प्रकल्पयेत्.
8 G पूर्वदत्तस्त्रीधनम्.
9 B, C, D, E, N omit अनीहमानस्य.
10 B, C, D, E, G, K, N ०जिघृक्षाभावे; B omits आह.

शक्तस्यानीहमानस्य किंचिद्दत्वा पृथक्क्रिया ॥

किंचिद्दानं च तत्पुत्राणां दायजिघृक्षानिवृत्त्यर्थमिति मिताक्षरायाम् ।

पितृमरणानन्तरं समविभाग उक्तः[1] स्मृत्यन्तरे (याज्ञवल्क्य २. ११७)

विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं[2] समम् ॥

हारीतः—समानो मृते पितरि रिक्थभागः—इति ॥

याज्ञवल्क्यः (२. १२३)—पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् । विष्णुः (विष्णुध. सू. १८. ३४)—मातरः पुत्रभागानुसारिभागहारिण्यः । स्मृत्यन्तरे

जननी त्वधना[3] पुत्रैर्विभागेंशं समं हरेत् ॥

सधना तु यावता स्वधनस्य पुत्रांशसमभागता भवति[4] तावदेव हरेदित्यर्थः । अंशाधिकधनायास्तु नांशः । सापत्नमातुः[5] पितामह्याश्चांशमाह व्यासः

असुताश्च पितुः पत्न्यः समानांशाः प्रकीर्तिताः ।
पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्तिताः ॥

सर्वा इत्यनेन पितामहीसपत्न्योपि गृह्यन्ते ॥

अनेकभ्रातृपुत्राणां[6] विभागप्रकारमाह याज्ञवल्क्यः (२. १२०)

अनेकपितृकाणां तु पितृतो भागकल्पना ॥

एकस्यैकः पुत्रोपरस्य द्वावन्यस्य त्रयस्तेषां पितृसंख्ययैव विभागो

---

1 B, D, E उक्तस्तेनैव विभजेरन्; B समभागः for समविभागः.
2 B, D, E समम्ृणम्.
3 B, C, D, E, N जनन्यस्वधना. परा. मा. and स्मृतिच० read अस्वधना.
4 B, D, E भवति तावति तावदेव; E समभोगता for समभागता.
5 A, B, C, D, E, H, K सपत्नमातुः.
6 B अनेकमातृपुत्राणाम्.

न [1]विभाजकसंख्ययेत्यर्थः । कात्यायनः

अविभक्तेनुजे प्रेते तत्सुतं रिक्थभागिनम् ।
[2]कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
[3]लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातृणां न्यायतो भवेत् ॥
लभते तत्सुतो वापि निवृत्तिः परतो भवेत् ॥

अनुजपदं ज्यायसोप्युपलक्षणम् । परतः प्रपौत्रात् । प्रपौत्र[4]पुत्रादिः पितृपितामहप्रपितामहेषु मृतेष्वनन्तरं वृद्धप्रपितामहे मृतेन्यस्मिंश्च तत्पुत्रादिके जीवति तद्धनं न लभते । पुत्रपौत्र[5]प्रपौत्रसामान्याभावे सोपि लभत एवेत्यर्थः । इदं च नाविभक्तपरं किं तु संसृष्टपरं

अवि[6]भक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः ॥ इति

देवलोक्तेः ॥

[7]ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितो वा भागभागागतस्तु सः ॥
गोत्रसाधारणं त्यक्त्वा योन्यं देशं समाश्रितः ।
तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥

1 B न भाजकसंख्यया.
2 E omits कुर्वीत जीवनं येन.
3 B omits लभेतांशं...परतो भवेत्.
4 D, E प्रपौत्रादिः.
5 E, F omit प्रपौत्र.
6 F omits अविभक्तविभक्तानां...संशयः.
7 B, D omit ऋणं लेख्यं...न संशयः; C omits त्यक्त्वा यो. विवादचिन्तामणि reads क्षेत्रं साधारणं for गोत्रसाधारणम्.

अविभक्तविभक्तानां वृद्धप्रपितामहतत्पुत्राणां च संसृष्टानामि[1]त्यर्थः । इदं च समदेशस्थितपरम् । देशान्तरस्थस्तु पञ्चमादिरपि लभत[2] एव ।

तृतीयः पञ्चमश्चैव सप्तमश्चापि यो भवेत् ।
जन्मनाम[3]परिज्ञाने लभेतांशं क्रमागतम् ॥ इति

देशान्तरप्रक्रमेण बृहस्पतिस्मृतेः[4] ॥

क्वचिन्मातृतो विभागमाह बृहस्पतिः

यद्येकजाता बहवः समाना जातिसंख्यया ।
सापत्न्यास्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥

व्यासः

समानजातिसंख्या ये जातास्त्वेकेन सूनवः ।
विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ॥

एतत्प्रत्युदाहरणमाह बृहस्पतिः ।

सवर्णा[5] भिन्नसंख्या ये पुंभागस्तेषु शस्यते ।

विजातीयविभागमाह याज्ञवल्क्यः ( २. १२५ )

चतुस्त्रिद्व्येकभागाः स्युः क्रम[6]शो ब्राह्मणात्मजाः ।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥

---

1 B, D, E, F, G संसृष्टिनाम्.
2 B, D, E, F put after लभत एव the verses ऋणं लेख्यं...संशयः.
3 B, D, E, F जन्मनामापरिज्ञाने.
4 C बृहस्पतिः for बृहस्पतिस्मृतेः.
5 G सवर्णभिन्नसंख्या ये.
6 याज्ञवल्क्यस्मृति reads वर्णशः for क्रमशः.

ब्राह्मणात्मजा ब्राह्मणीक्षत्रियावैश्याशूद्रासु[1] जाताः । क्षत्रजाः क्षत्रियावैश्याशूद्रासु[2] जाताः । विड्जा वैश्याशूद्र्योर्जाताः[3] ॥ बृहस्पतिः

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्येषां[4] पिता दद्यान्मृते विप्रासुतो हरेत् ॥

देवलः

शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥

भूमेः[5] क्रयादिप्राप्ताया अपि । द्रव्यस्य तु लभत एव । अपरिणीतशूद्रापुत्रस्तु द्रव्यांशमपि न लभते । तथा च मनुः ( ९. १५५ )

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥

पितृमरणोत्तरं विशेषमाह बृहस्पतिः

अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।
लभेत जीवनं[6] शेषं सपिण्डाः सममाप्नुयुः ॥

गौतमः ( २८. ३७ )—शूद्रापुत्रोप्यनपत्यस्य शुश्रूषुश्चेल्लभते वृत्तिमूलम् । वृत्तिमूलं जीवनकारणम् । स एव ( गौ. ध. सू. २८. ४३ )—शूद्रापुत्रवत्प्रतिलोमास्तु—इति । प्रतिलोमास्तूत्पादकापेक्षयोत्कृष्टवर्णस्त्रीषूत्पन्नाः[7] ॥ शूद्रेणापरिणीतायामुत्पन्ने विशेषमाह याज्ञवल्क्यः ( २. १३३–१३४ )

---

1 D, F ०शूद्रासुताः.

2 C, G, K omit जाताः after शूद्रासु; D, F शूद्रास्तु.

3 B, C, D, H, K शूद्र्योः । बृहस्पतिः.

4 दायभाग reads यद्यप्यस्य for यद्यप्येषाम्.

5 C, N omit भूमेः...प्राप्ताया अपि.

6 दायभाग and वि. चि. read लभेताजीवनम्.

7 A, B, D, F, G स्त्रीषूत्पन्नेष्वित्यर्थः; C स्त्रीषूत्पन्न इत्यर्थः.

जातोपि दास्यां शूद्रेण कामतोंशहरो भवेत् ॥
मृते पितरि कुर्युस्तं[1] भ्रातरस्त्वर्धभागिकम् ।

कामः पितुरिच्छा । शूद्रेणेति पदात्[2] द्विजातिभिर्दास्यामुत्पन्नस्तु पित्रिच्छयापि नांशभाक् । नापि[3] पितृमरणोत्तरमर्धं नापि पुत्राद्यभावे सर्वमिति मदनरत्नादिषु ॥

विभागानन्तरोत्पन्नपुत्रे[4] विशेषमाह गौतमः ( २८. २७. )—विभक्तजः पित्र्यमेव—इति । बृहस्पतिरपि[5]

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् ।
विभक्तजस्य[6] तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथर्णे च दानाधानक्रयेषु[7] च ।
परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाम् ॥

ऋणमात्रसत्त्वे[8] तु पूर्वविभक्तेभ्यो विभागग्रहणं विना तेनर्णं नैव देयम् । रिक्थग्राह ऋणं दाप्यः ( याज्ञवल्क्य २. ५१ )—इति वक्ष्यमाणत्वात् ॥ कस्मिंश्चित्संसृष्टे[9] तु तेन सह विभागः ।

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्[10] ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥ इति

---

1 D, E, F कुर्युस्ते भ्रातरा द्विभागिकम्.
2 C, H, K, N omit पदात् after शूद्रेणेति.
3 H omits after नापि the words पितृमरणोत्तर....विभक्तेन.
4 E ०त्पन्नपुत्रविशेष०. B reads ०विशेषमाह बृहस्पतिः पुत्रैः; C reads ०रोत्पन्ने विशेषमाह. A, G, K omit गौतमः.
5 A, C, G, K omit अपि after बृहस्पतिः.
6 F विभक्तं तस्य तत्सर्व०.
7 A, C, G, M दानादानक्रयेषु च.
8 B ०ऋणमात्रसत्त्वं तु.
9 B, D, E, F, G कस्यचित्संसृष्टत्वे ( G संसृष्टे तु )
10 M, N धनं हरेत्.

मनूक्तेः (९. २१६.)। पितृमरणोत्तरविभागकाले[1]ऽस्पष्टगर्भायां मातरि तत्सपत्न्यां भ्रातृपत्न्यां वा[2]नन्तरसमुत्पन्ने विशेषमाह याज्ञवल्क्यः (२. १२२.)

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ॥

विभागश्च सर्वैर्भ्रात्रादिभिः स्वस्वांशात्किंचि[3]त्किंचिदुद्धृत्य यथा स्वांशसमो भवति तथा[4] कार्यः। विष्णुः (विष्णुध. सू. १७. ३.)– पितृविभक्ता विभा[5]गानन्तरोत्पन्नस्य विभागं दद्युः। इदं च तदंशेषु रेकसेकसहितेषु[6] ज्ञेयम्। तत्सत्त्वे तु स एवाह (याज्ञवल्क्य २. १२२)

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥

दृश्याद्विद्यमान[7]द्रव्यात् ॥ भ्रातॄणां विभागकाले विशेषमाह वसिष्ठः (वसिष्ठध. सू. १७. ४०–४१)–अथ भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रियस्तासामापुत्रलाभात्–इति। प्रतीक्षा कार्येति शेषः ॥ पितृमरणोत्तरं[8] विभागे विशेषमाह बृहस्पतिः।

असंस्कृता[9] भ्रातरस्तु ये स्युस्तत्र यवीयसः।
संस्कार्याः[10] पूर्वजैनैव[11] पैतृकान्मध्यकाद्धनात् ॥

यवीयस इति नुम्दीर्घाभावश्च छान्दसः। भ्रातृग्रहणं भगिनीनामुपलक्षणम्[12] ॥ तथा च स एव

---

1 B omits (through oversight) ०काले...सवर्णायां विभाग०.

2 D, E, F वानन्तरमुत्पन्नं; G, K अनन्तरमुत्पन्ने.

3. B, C, F omit one किंचित्.

4 E omits तथा कार्यः and adds यथा before विष्णुः.

5 D, E, F read पितृविभागानन्तरो०. विष्णुध. सू. reads भागं for विभागम्.

6 B, D, E, F रंकसेवकसहितेषु; K रेतःसेकसहितेषु.

7 E, F विद्यमानत्वात्.

8 D, E, H ०मरणोत्तरविभागे.

9 C, K, N read भ्रातरस्तु संस्कार्यास्ते यवीयसः.

10 C, H, K, N omit संस्कार्याः...छान्दसः.

11 G पूर्वजैस्तै वै पितृकात्.

12 D, E, F ०लक्षणं तथा च नारदः। असंस्कृतास्तु. G भगिनीनामप्युपलक्षणम्.

असंस्कृतास्तु यास्तत्र[1] पैतृकादेव ता धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥ इति ।

भगिनीसंस्कारे[2] विशेषमाह याज्ञवल्क्यः (२. १२४)

[3]असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्[4]दत्त्वांशं तु तुरीयकम् ॥

यज्जातीयाः[5] कन्यास्तज्जातीयपुत्रस्य यावान् भागस्तस्य [6]चतुर्थमंशं [7]प्रत्येकं भगिनीभ्यो दत्त्वा ताः संस्कर्तव्या इत्यर्थः ॥

दायग्रहणव्यवस्थोपयोगितया मुख्यगौणपुत्रव्यवस्थामाह याज्ञवल्क्यः (२. १२८–१३२)

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयङ्कृतः ।
दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः[8] सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत्सुतः ।

---

1 अपरार्क, स्मृतिच०, वीर० read ये तत्र for यास्तत्र.
2 G भगिनीनां संस्कारे; C, N omit भगिनी...माह.
3 B omits असंस्कृतास्तु...याज्ञवल्क्यः.
4 A, M, N अंशं दत्त्वा तुरीयकम्.
5 A, F, K यज्जातीया कन्या तज्जातीय०.
6 C, D, E, F, G, K repeat चतुर्थम्.
7 D, E, F चतुर्थमंशं प्रतिभगिनि दत्त्वा. G प्रतिभगिनीभ्यः.
8 B, D, E, F वित्तः for विन्नः.

सवर्णायां धर्मपत्न्यामुत्पन्न औरसः पुत्रो मुख्यः । पुत्रिकासुतो द्वेधा । तत्राद्यमाह वसिष्ठः ( वसिष्ठध. सू. १७. १७ )

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥ इति ।

अन्यमाह स एव ( वसिष्ठध. सू. १७. १५ )—तृतीयः पुत्रिकैव- इति । अस्मिन्पक्षे कन्ययैव पितुरौर्ध्वदेहिकादि[1] कार्यम् । क्षेत्रजोऽपुत्र-[2] भ्रात्रादिपत्न्यां गुर्वाज्ञया देवरादिसगोत्रेणोत्पन्नः । अक्षतायां पूर्ववो-ढ्रभुक्तायां क्षतायां तेन भुक्तायां वा वोढ्रन्तरेणोत्पन्नः पौनर्भवः । अत्र दत्तकभिन्ना गौणाः पुत्राः कलौ वर्ज्याः । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः—इति तन्निषेधेषु पाठात् ॥

## ॥ [3]अथ दत्तकप्रकरणम् ॥

अथ दत्तकविधिः ॥ मनुः ( ९. १६८ )

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥

वाशब्दान्मात्रभावे पितैव दद्यात् पित्रभावे मातैव उभयसत्त्वे तु उभावपीति मदनः ॥ आपद्ग्रहणादनापदि न देयः ॥ अयं निषेधो दातुरेव पुरुषार्थो न क्रत्वर्थ इति विज्ञानेश्वरः । तन्न । अस्य वाक्याद[4]-दृष्टार्थतया क्रत्वर्थत्वावगमात् । कथंचिद्दृष्टार्थत्वेपि[5] वा नियमादृष्टस्य आवश्यकत्वान्न[6] तदतिक्रमे कार्यविशेषप्रयोजकादृष्टसिद्धिः[7] ॥ केचित्त्वा-

1 B, D, E, F और्ध्वदेहिकम्; M और्ध्वदेहादि.
2 B, D, E क्षेत्रज अपुत्रपत्न्याम्.
3 A, B, C, D, E, F, H, K, N omit अथ दत्तकप्रकरणम्.
4 F वाक्याद् दृष्टार्थं॰.
5 G दृष्टार्थत्वेपि च.
6 A, E, F, G, H आवश्यकत्वात्तदतिक्रमे.
7 G विशेषयोजकादृष्ट॰.

पच्छब्दस्य स्वार्थत्यागाद्यापत्तेरनापत्परिसंख्या[1]पकत्वाभावेन न निषेधार्थकत्वं किं त्वापदो निमित्त[2]मात्रबोधकत्वमेव । न च नैमित्तिकत्व आपदि पु[3]त्रादाने प्रत्यवायापत्तिः । एतद्वाक्यस्य संज्ञासंज्ञिसंबन्धमात्रबोधकत्वात् । आपदि निमित्ते दानविधायकत्वाभावात् ॥ यदपि वि[4]वाहप्रकरणे तेनैवोक्तं रोगिण्यादिनिषेधातिक्रमे दृष्टविरोध एव भार्यात्वं तूत्पद्यत एवेति तदप्यनेनैवापास्तम् ॥ सदृशं कुलगुणादिभिर्न जात्या। अतः क्षत्रियादिरपि विप्रादेर्दत्तको भवतीति मेधातिथिः। सदृशं जात्येति कुल्लूकभट्टः। युक्तं चेदम्। याज्ञवल्क्येन ( २. १२८ ) औरसो धर्मपत्नीजः इति द्वादशापि पुत्राननुक्रम्य—सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ( याज्ञवल्क्य २. १३३ ) इत्युपसंहारात् । स्पष्टीकरिष्यते चेदं वक्ष्यमाणशौनकवचोभ्याम् । विज्ञानेश्वरोप्येवम् । ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः ( मनु. ९. १०६ )—इति ज्येष्ठस्यैव पुत्रकार्यकरणे मुख्यत्वात्स न देय इत्ययमपि निषेधो दातुरेव न प्रतिग्रहीतुरित्यपि सः । स्यादयं प्रतिषेधो दातुरेव यद्येतस्य ज्येष्ठदाननिषेधकता स्यात् । न तु सास्ति । मानाभावात् । पुत्रीभवतीत्यनेन पुत्रित्व[5]मात्रोक्त्या ऋणापाकरणोक्तिमात्रपरत्वाच्च । अत एव पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति (मनु. ९. १०६ )—इत्युत्तरार्धं संगच्छते । सर्वं द्रव्यम् ॥ दत्तकश्च पुमानेव भवति न कन्या । स ज्ञेयो दत्रिमः सुतः ( मनु. ९. १६८ )—इति संज्ञासंज्ञि[6]संबन्धबोधकवाक्यगतेन स इति सर्वनाम्ना माता[7]पितृकर्तृकप्रीतिजलगुणकापन्निमित्तकदानकर्मीभूतसजातीयपुंस एव—अष्टवर्षं ब्रा-

1 A, B, D, E, F, H परिसंख्यायकत्वा०; C, E, G, H omit न after ०भावेन.

2 D निमित्तमात्रबोधकत्वात् आपदि निमित्ते दानविधायकत्वाभावात्.

3 B पुत्रदाने for पुत्रादाने.

4 C, G, K विवादप्रकरणे.

5 C omits पुत्रित्वमात्रोक्त्या; K ०भवतीत्यनेन पुत्रित्वोक्ते ऋणापाकरणमात्र०.

6 D, E omit संज्ञि; E omits बोध०.

7 B, D, F मातापितृकप्रीति०.

ह्मणमुपनयीत[1] तमध्यापयीत—इति तच्छब्देनाष्टवर्षब्राह्मण्यपुंस्त्वोपनयनादिसंस्कृतस्यैवं[2] परामर्शात्। एतेन—त्रेर्मम् नित्यम् (पा. ४. ४. २०)—इति मवन्तो[3] दत्रिमशब्दो दाननिर्वृत्तकर्मत्वाविशेषाद्वरायान्यस्मै वा दत्तां कन्यामप्यभिधत्त इति केषांचिदुक्तिः परास्ता ॥

पुत्रप्रतिग्रहप्रकारमाह शौनकः

शौनकोहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य[4] च ॥
वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम्।
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम् ॥
बर्हिः कुशमयं[5] चैव पालाशं चेध्ममेव च।
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय[6] सत्तमः ॥
बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः।
अन्वाधानादि[7] यत्तन्त्रं कृत्वाज्योत्पवनादिकम्[8] ॥
दातुः समक्षं गत्वा तुं[9] पुत्रं देहीति याचयेत्।
दाने समर्थो दातास्मै ये यज्ञेनेति पञ्चभिः (ऋ. सं. १०. ६२. १–५) ॥
देवस्य त्वेति मन्त्रेण (वाज. सं. २०. ३; काठकसं. १. २, ४) हस्ताभ्यां प्रतिगृह्य[10] च।

---

1 D, E उपनीयत.
2 M reads ०संस्कृतस्यैव.
3 B, C, D, E, F, K ममन्तो.
4 D omits the words समुपोष्य…कुशमयम्.
5 A, B, E, F कुशसमं for कुशमयम्.
6 A, G, M ज्ञातिमाहूय.
7 दत्त. मी. reads अग्न्याधानादिकं for अन्वाधानादि.
8 निर्णयसिन्धु reads आज्योत्पवनान्तकम्.
9 F गत्वा तम्.
10 F परिगृह्य.

अङ्गादङ्गेत्यृचं ( शत. ब्रा. १४. ९. ४. ८; मा. गृ. सू. १. १८. ६.; आश्व. गृ. सू. १. १५. ११; नि. ३. ४ ) जप्त्वा चाघ्राय शिशुमूर्धनि ॥

वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतम् ।
नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ॥
गृहमध्ये[1] तमादाय चरुं हुत्वा विधानतः ।
यस्त्वा हृदेत्यृचा ( ऋ. सं. ५. ४. १० ) चैव तुभ्यमग्र[2] ऋचैकया ( ऋ. सं. १०. ८५. ३८ ) ॥
सोमो ददद्दित्येताभिः ( ऋ. सं. १०. ८५. ४१ ) प्रत्यृचं पञ्चभिस्तथा ।
स्विष्टकृदादिहोमं च कृत्वा शेषं समापयेत् ॥
ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डो[3] वा अन्यत्र तु न कारयेत् ॥
क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमोपि वा ।
वैश्यानां वैश्यजातेषु[4] शूद्राणां शूद्रजातिषु[5] ॥
सर्वेषामेवं[6] वर्णानां जातिष्वेव न[7] चान्यतः ।
दौहित्रो भागिनेयश्च शूद्रस्यापि[8] च दीयते ॥

---

1 A, B, D, E, F read गृहीत्वा as a separate clause before the verses गृहमध्ये &c.

2 C तुभ्यमग्नं ऋचैकया.

3 दत्त. मी. reads ०सपिण्डे वा for ०सपिण्डो वा and ०गोत्रसमे for ०गोत्रसमो.

4 A, G, M वैश्यजातिषु.

5 B शूद्रजातेषु.

6 C, D, E, F, H, K सर्वेषां चैव वर्णानाम्.

7 B, C, D, E, F, H, K च नान्यतः.

8 दत्त. मी. reads शूद्रैस्तु क्रियते सुतः for शूद्रस्यापि च दीयते and reads ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् before नैकपुत्रेण &c.

नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन ।
बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥
दक्षिणां गुरवे दत्वा यथाशक्ति द्विजोत्तमः[1] ।
नृपो राष्ट्रार्ध[2]मेवापि वैश्यो[3] वित्तशतत्रयम् ॥
शूद्रः सर्वस्वमेवापि अशक्त[4]श्चेद्यथाबलम् ॥

छायावहं सदृशम् । दौहित्रो भागिनेयश्चेति यथा भूत[5]भाव्युपयोगित्वेन दण्डस्य—मैत्रावरुणाय दण्डं[6] प्रयच्छति—इत्यत्र संभवत्यपि भाव्यत्वे चतुर्थ्या—दण्डी प्रैषानन्वाह—इति प्रैषानुवचनकर्तृत्वेन भाव्युपयोगिनो मैत्रावरुणस्यैव भाव्यत्वमुक्तं तथेहाप्यनपाकृतर्णत्वेन चतुर्थ्यर्थषष्ठ्या शूद्रस्यैव दौहित्रभागिनेयावपि प्रति शेषितया भाव्यत्वम् । अतस्तयोरेव विधेयत्वेन दौहित्रभागिनेयावेव शूद्रस्येति नियमविधिविषयताप्युक्ता । शूद्रस्य त्वविधेयत्वेन तद्विषयत्वायोगात् । तौ शूद्रस्यैवेति वचनव्यक्तौ विप्रादिशेष्यन्तरपरिसंख्यापत्तेः । तस्माद्दौहित्रभागिनेयावेव शूद्रस्य मुख्यौ । तद[7]भावे त्वन्योपि सजातीयः । शूद्राणां शूद्रजातिष्विति तेनैवोक्तेः । न चेदं जातिपदं दौहित्रभागिनेययोरेवोपसंह्रियते । दौहित्रत्वभागिनेयत्वयोः सजातीयत्व[8]स्य च परस्परव्यभिचारित्वा[9]त् । एकस्मृतौ सामान्यवाक्यवैयर्थ्यापत्तेश्च । विवृतं चैतद्द्वैतनिर्णये तातचरणैः । शिष्टाचारोप्येवम् ॥ एवं च निषा-

1 D, E, F द्विजोत्तम.
2 दत्त. मी. reads राज्यार्धं॰ for राष्ट्रार्धं॰.
3 F omits वैश्यो...सर्वस्वमेवापि.
4 A, G, M अशक्तौ तद्यथा॰.
5 C, H, K, N भूतोपयोगित्वेन.
6 H omits दण्डं प्रयच्छ...मैत्रावरुण ( by oversight ).
7 A, M तदभावेन्योपि.
8 F सजातीयत्वस्येव.
9 D, E, F व्यभिचारत्वात्.

स्थपतिवत्तस्याधिकारे सिद्धे यच्छुद्धिविवेक उक्तं वैदिकमन्त्रसाध्यहोमवति पुत्रप्रतिग्रहे शूद्रस्यानधिकारः—इति तदपास्तम्। समन्त्रहोमस्तु तेन विप्रद्वारा कार्यः।

उपवासो व्रतं होमस्तीर्थस्नानजपादिकम्।
विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम्॥ इति

पराशरोक्तेः (पराशरस्मृति ६. ६३–६४)। स्मार्तहरिनाथाद्यप्येवमेव॥ यत्तु पराशर एव (पराशरस्मृति १२. ३९)

दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः।
ब्राह्मणस्तु[2] भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत्॥ इति

तत्तु शूद्रस्य[3] कर्मसाद्गुण्यं विप्रस्य च दोषं प्रतिपादयतीति माधवः॥

स्त्रिया अपि शूद्रवदेवाधिकारः। स्त्रीशूद्राश्च सधर्माणः[4]—इति वाक्यात्॥ वसिष्ठः (वसिष्ठध. सू. १५. १–९) शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकः। तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः। न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा। स[5] हि त्रायते पुरुषम्। न तु स्त्री पुत्रं दद्यात्[6]प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुः। पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि च निवेद्य[7] निवेशनस्य मध्ये व्याहृतिभिर्हुत्वादूरेबान्धवं[8] संनिकृष्टमेव प्रतिगृह्णीयात्। संदेहे

---

1 A, M पुत्रपरिग्रहे.

2 F ब्राह्मणस्य भवेच्छूद्रः शूद्रस्य ब्राह्मणो.

3 A, M शूद्रकर्मसाद्गुण्यं विप्रस्य दोषम्.

4 D, E, F सधर्मण इति.

5 वसिष्ठध. सू. reads स हि संतानाय पूर्वेषाम् for स हि त्रायते पुरुषम्. अपरार्क, वि. र., वीर०, दत्त. मी. follow the वसिष्ठ. ध. सू.

6 A, C, G, M गृह्णीयात् for प्रतिगृह्णीयात्. अपरार्क omits प्रतिगृह्णीयाद्वा.

7 B, C, D, E, F, H, K चावेद्य.

8 The वसिष्ठ. ध. सू. and मद. पारि. read अदूरबान्धवं बन्धुसंनिकृष्टमेव; the मिता० and वीर० read अदूरबान्धवं बन्धुसंनिकृष्ट एव; अपरार्क and स्मृतिच० read अदूरेबान्धवमसंनिकृष्टमेव; वि. र. 'अदूरबान्धवमसंनिकृष्टमेव'.

चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहूंस्तारयेदिति । तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी[1] स्यात् । इति ।। भर्त्रनुज्ञा[2] तु सधवाया एव दृष्टार्थत्वात् । विधवायास्तु तां[3] विनापि पितुस्तदभावे ज्ञातीनामाज्ञया भवति । अत एव

रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं कचित्स्त्रियाः ।। इति

याज्ञवल्क्येन ( १. ८५ ) अवस्थाविशेष एव भर्तुः पारतन्त्र्यमुक्तम् । तदभावे वार्धकादिना तस्याक्षमतायां वा पुत्रादीनामपि । कात्यायनेनापि

नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा ।
विफलं[4] तद्भवेत्तस्या यत्करोत्यौर्ध्वदेहिकम् ।। इति

अवस्थाविशेष एव पितृभर्त्राद्यनुज्ञोक्ता । और्ध्वदेहिकं पारलौकिकम् । अतो यस्यामवस्थायां भर्त्रनुज्ञा प्राप्ता सैवात्रानूद्यते न त्वपूर्वा विधीयते । अतो विधवाया भर्तुराज्ञां[5] विनाप्यधिकारः ।। अदूरे बान्धवो यथायथं संनिहितः सपिण्डः । संनिहितेष्वपि भ्रातृपुत्रो मुख्यः

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ।। इति

मनूक्तेरिति ( मनु. ९. १८२ ) मिताक्षरायाम् । इदमेव चैतद्वचसः प्रयोजनं युक्तम् । अन्यासंभवात् ।। दूरेबान्धवं विजातीयम् ।।

---

1 C ०भागभागः स्यात्.

2 F भर्त्रनुज्ञाता.

3 B, D, E, F तां विना पितुः.

4 E omits विफलं...नुज्ञोक्ता. B विकलं for विफलम्; D, F विकल्पम्.

5 B, C, D, E, F, K भर्तुरनुज्ञा.

दत्तकस्तु परिणीत उत्पन्नपुत्रोपि च भवतीति तातचरणाः। युक्तं चेदं बाधकाभावात्। यत्तु कालिकापुराणे

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः॥
चूडो[1]पनयसंस्कारा निजगोत्रे[2]ण वै कृताः।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते॥
ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप।
गृहीत्वा पञ्चवर्षीयं पुत्रे[3]ष्टिं प्रथमं चरेत्॥ इति

तद[4]सगोत्रपरम्। आचूडान्तमित्याङभिव्याप्त्यर्थः। मर्यादार्थत्वे चूडोपनयसंस्कारा इत्यनेन विरोधापत्तेः। इदं तु वचो न तथा विस्रम्भणीयं द्वित्रै[5]कालिकापुराणपुस्तकेष्वदर्शनात्॥

अयं च दत्तको द्विविधः। केवलो द्व्यामुष्यायणश्च। संविदं विना दत्त आद्यः। आवयोरसाविति संविदा दत्तस्त्वन्त्यः। तत्राद्यः प्रतिग्रहीतुरेवौर्ध्वदेहिकश्राद्धादि कुर्यात्। तथाहि पुत्रप्रतिग्रहस्य भाव्याकाङ्क्षायां पुत्रं प्रतिग्रहीष्यन् (वसिष्ठध. सू. १५. ६)-इत्यादिके तद्विधौ पुत्रमिति द्वितीयान्तेन पुत्रस्य भाव्यत्वमुक्तम्। न च जन्यपुंस्त्वाख्यं पुत्रत्वं भावयितुं शक्यम्। तेन पुत्रशब्देन सर्वं पुत्र[6]कार्यं लक्षयित्वा तत्प्रयोजकमदृष्टं भाव्यमङ्गीकर्तव्यम्। अतः प्रतिग्रहीतृकुले

---

1 दत्त. मी. reads चूडाद्या यदि संस्काराः.

2 G गोत्रेण चेत्कृताः; G दत्तकाद्याः सुतास्ते. H omits संस्कारा...मर्यादार्थत्वे चूडोपनयसंस्कारा इत्यनेन.

3 E omits पुत्रेष्टिम्.

4 E omits तदसगोत्र...विरोधापत्तेः.

5 A, C, D, E, F, G, K द्वित्रिकालिका.

6 E, F सर्वपुत्रकार्यम्.

पुत्रपित्रादिसंबन्धविशेषप्रयुक्तानि[1] कार्याणि प्रवर्तन्ते । अत एवाह मनुः (९. १४२)

गोत्ररिक्थे जनयितुर्न[2] भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः प्रायस्तत्समनियत इति यावत् । दत्रिमः केवलः द्व्यामुष्यायणे गोत्राद्यनुवृत्तेर्वक्ष्यमाणत्वात् । पिण्डः श्राद्धमौर्ध्वदेहिकादीति मेधातिथिकुल्लूकभट्टादयः । पिण्डः सापिण्ड्यं स्वधौर्ध्वदेहिकश्राद्धादीत्यपरे । वस्तुतस्तु यथा—जातपुत्रः कृष्णकेशोग्नीनादधीत—इत्यत्र वयोवस्थाविशेषः यथा वा—अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि—इत्यनेन देशविशेषो लक्ष्यते तथात्र[3] गोत्ररिक्थपिण्डस्वधापदै[4]र्जनकादीनां[5] पिण्डसंबन्धप्रयुक्तं कार्यमात्रं लक्षयित्वा तन्निवृत्तिरुच्यते । तेन सोदरपितृव्यादिसंबन्धनिवृत्तिरपि सिद्धा भवति । अत एव केवलदत्तकजन्यः पुत्रोपि पितुः सपिण्डीकरणपार्वणश्राद्धादि प्रतिग्रहीत्रैव सह कुर्यात् । एवं तत्पुत्रोपि ॥ यत्तु—अथ चेद्दत्तक[6]क्रीतपुत्रिकापुत्राः परपरिग्रहेणानार्षेयास्ते द्व्यामुष्यायणा भवन्ति—इत्यादिना द्व्यामुष्यायणानुपक्रम्य कात्यायनः अथ यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युरथ यद्युभयोर्न स्यादुभाभ्यां[7] दद्युरेकस्मिञ्छ्राद्धे पृथगुद्दिश्य द्वावनुकीर्तयेत् प्रतिग्रहीतारं[8] चोत्पादयितारं चातृतीयात्पुरुषात्—इति तद्द्व्यामुष्यायणप-

1 G ०संबन्धप्रत्युक्तानि.

2 B, D, E, F न भवेत्.

3 G तथात्रापि गोत्र०.

4 G स्वधाशब्दे for स्वधापदैः.

5 B, C, D, F, G, H, K जनकादीनां संबन्धप्रयुक्तं; D, F प्रयुक्तकार्यमात्रम्.

6 G दत्तक्रीत०.

7 निर्णय० reads उभाभ्यामेव दद्युः and पृथगुद्दिश्यैकपिण्डे द्वावनु०.

8 G, H ०ग्रहीतारमुत्पादयितारम्.

रम् । द्व्यामुष्यायणा भवन्तीत्युपक्रमात् । तेन द्व्यामुष्यायणो जनकस्य प्रतिग्रहीतुर्वा पुत्रान्तरासत्त्वे तस्मै पिण्डं दद्यात् रिक्थं च गृह्णीयात् । न तत्सत्त्वे ॥ यदा तूभयोरप्यौरसाः पुत्राः सन्ति तदा कस्मा अपि न दद्यात् प्रतिग्रहीत्रौरसांशस्य चतुर्थं भागं च हरेत् । तस्मिंश्चेत्प्रतिगृहीते औरस[1] उत्पद्येत चतुर्थभागभागी स्यात्[2]–इति वसिष्ठोक्तेः ( वसिष्ठध. सू. १५.९ )

उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः ।
सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः ॥ इति

कात्यायनोक्तेश्च । तृतीयांशहरा इति[3] कल्पतरौ पाठः । सवर्णाः क्षेत्रजदत्तकादय इति विज्ञानेश्वरः ॥ यदा तूभयोः[4] पुत्राभावस्तदैकस्मिन् श्राद्ध इत्याद्युक्तप्रकारेणोभयोरप्येकमेव श्राद्धं कुर्यात् ॥ यदपि[5] हेमाद्रौ कार्ष्णाजिनिः[6]

यावन्तः पितृवर्गाः[7] स्युस्तावद्भिर्दत्तकादयः[8] ।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम् ।
चतुर्थे[9] पुरुषे छन्दस्[10]तस्मादेषा[11] त्रिपौरुषी ॥

---

1 G औरसपुत्र उत्पद्येत.
2 वसिष्ठध. सू. reads ०स्याद्दत्तकः.
3 B, C, D, F, G, H, K इति तु कल्पतरौ.
4 G तूभयोरपि पुत्राभावः.
5 B, D, F तदपि for यदपि.
6 A, H, K कार्ष्णाजिनः.
7 G पितृवर्ग्याः.
8 G पुत्रकादयः for दत्तकादयः.
9 B, C, D, F, K चतुर्थपुरुषे.
10 दत्त. मी reads छेदः for छन्दः.
11 A, C, D, M तस्मादेवां त्रिपौरुषी for तस्मादेषा त्रि०.

साधारणेषु कालेषु विशेषो नास्ति वर्गिणाम् ।
मृताहे[1] त्वेकमुद्दिश्य कुर्युः श्राद्धं यथाविधि ॥ इति

तदपि कात्यायनीय[2]समानार्थमेव । अयमर्थः । द्व्यामुष्यायणदत्तकादयो जनकप्रतिग्रहीत्रोः कुले मृतानां स्ववर्गैस्तत्पित्रादिभिः सह सपिण्डीकरणं कुर्युः दत्तकादिपुत्रास्तु तेषां जनकप्रतिग्रहीतृभ्यां सह कुर्युः तत्पौत्रा अपि स्वपितरं दत्तकेन पितामहेन तज्जनकेन प्रपितामहेन[3] चतुर्थे पुरुषे तत्प्रपौत्रे[4] छन्दः इच्छा प्रतिग्रहीतारमुच्चारयेन्न[5] वेति जनकं तूच्चारयेदेव साधारणेष्वमावास्यादिकालेषु जनकप्रतिग्रहीतृवर्गिणां श्राद्धं कार्यं मृताहे त्वेकमेवोद्दिश्यैकोद्दिष्टं[6] श्राद्धं कुर्यादिति ॥ केचित्तु केवलदत्तकस्याविधानात्स नास्त्येव आवयोरसाविति संविदश्च विधानाभावात्तां विना गृहीतोपि द्व्यामुष्यायण एव तेनैव च जनकप्रतिग्रहीत्रोरुद्देशेनामावास्यादिषु श्राद्धद्वयमेकं वा श्राद्धं कार्यं तत्पुत्रेण[7] तु दत्तकस्य तज्जनकप्रतिग्रहीतृभ्यां द्वाभ्यामपि सह सपिण्डीकरणपार्वणश्राद्धादि कार्यं एवं तत्पुत्रादिभिरपीत्याहुः[8] । तच्चिन्त्यम् । यद्यपि केवलदत्तकः क्वापि शब्दतो नोक्तस्तथापि पूर्वोक्तमनुवचनेन ( मनु. ९. १४२ ) जनकादीनां संबन्धमात्रनिवृत्तेरुक्तत्वात् द्व्यामुष्यायणे तदभावादर्थात्सिध्यत्येव । किं च । ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च[9] मातृबन्धुभ्यः पञ्चमात्—इति गौतमीयेन (गौ. ध. सू.४.३)

1 G मृताहे त्वेवमुद्दिश्य.

2 G कात्यायनेन for कात्यायनीय.

3 E omits प्रपितामहेन.

4 B, C, D, E, F, H तत्पौत्रे.

5 G न वा जनकं तू°.

6 G एकोद्दिष्टं कार्यम् । केचित्तु.

7 F तत्पुत्रेण दत्तकस्य.

8 G तत्पुत्रादिभिरपीत्युक्तं तच्चिन्त्यम्.

9 G omits बीजिनश्च; B, D, E, F read जीविनश्च for बीजिनश्च.

बीजिकुले[1] सप्तपुरुषं यावद्विवाहो निषिद्धः[2] स द्व्यामुष्यायणे व्यर्थः स्यात् । तस्मिन्सापिण्ड्यसत्त्वात् । अतोवश्यमेतत्सार्थक्यार्थं केवलदत्तको वाच्यः । तत्र सापिण्ड्यनिवृत्तेरुक्तत्वात् । अपि च प्रवराध्याये

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेप्यनुद्वाहः शौङ्ग[3]शैशिरयोर्यथा ॥ इति ।

एतेन गोत्र[4]द्वयं द्व्यामुष्यायणस्योक्तं मानवीयेन[5] ( मनु. ९. १४२ ) च जनकगोत्रनिवृत्तिरुक्तेति विरोधः केवलद्व्यामुष्यायणभेदेनैव परिहरणीयः । तेन सिध्यत्येव केवलोपि दत्तकः ॥ अत एव शूरेण कुन्तिभोजाय दत्रिमत्वेन दत्तायाः कुन्त्याः सुतस्यार्जुनस्य शूरपुत्रवसुदेवदुहितुः सुभद्रायाः सापिण्ड्यनिवृत्तिं मनुवचनेनोक्त्वास्य गौतमीयस्य[6] बीजसंतानजाया अपि निषेधमात्रपरत्वमेव चोक्त्वार्जुनेन[7] सुभद्रापरिणेयेत्याशङ्क्य वार्तिकोक्तं संबन्धव्य[8]वधानकल्पनाख्यं समाधानमाह भट्टसोमेश्वरः ॥ यत्तु कश्चित्सोमेश्वरेण गौतमवचनात्कुन्त्याः शूरकुलेपि साप्तपौरुषं सापिण्ड्यमुक्तमित्याह तद्ग्रन्थानध्ययननिबन्धनम् । तेन हि सापिण्ड्यनिवृत्तिं पूर्वमुक्त्वा गौतमीयस्य जनककुले निषेधपरत्वमुक्तं न तु सापिण्ड्यबोधकत्वम् ॥ एवं सिद्धे केवले द्व्यामुष्यायणे चावयोरसाविति संविदपि सिध्यति । प्रतिग्रहीतुर्द्व्यामुष्यायणज्ञा-

---

1 E वाजिकुले for बीजिकुले.
2 B, C, D, E, F निषिद्धः स्यात्. A, H, K विवाहोतिविरुद्धः स्याद् द्व्यामुष्यायणे.
3 दत्त. मी. reads शृङ्गशैशिरयोः and दत्तकचन्द्रिका 'शुङ्ग०'.
4 B, C, D, E, F, G, K गोत्रद्वयमपि.
5 D, E, F मानुषीयेन च.
6 G गौतमवचनस्य.
7 A, M अर्जुनेन न सा सुभद्रा.
6 G संबन्धव्यवधानाख्यम्.

नार्थत्वेन[1] दृष्टार्थत्वात् ॥ अत्र[2] च केवलदत्तकस्य पालकपितृकुले साप्तपौरुषं मातृकुले च पाञ्चपौरुषं सापिण्ड्यम् ॥ यत्तु[3] वृद्धगौतमः

स्वगोत्रेण[4] कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥

यच्च बृहन्मनुः

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी[5] चैव गोत्रित्वं पालकस्य च ॥

यदपि नारदः

धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् ।
अंशपिण्ड[6]विभागित्वं तेषु केवलमिष्यते[7] ॥ इति

तान्यनाकराणि । साकरत्वेपि द्व्यामुष्यायणस्य प्रतिग्रहीतृकुले साप्तपौरुषसापिण्ड्याभावप्रतिपादनार्थम् । केवलदत्तके पूर्वोक्तगौतमीयेन (गौ. ध. सू. ४. ३) पालककुले साप्तपौरुषसापिण्ड्यस्योक्तत्वात् । मानवीयेन (मनु. ९. १४२) च जनककुले सापिण्ड्यनिवृत्तेरुक्तत्वात् ॥ यस्तु[8] सापिण्ड्यनिर्णये केषांचिन्मान्यानां लेखः[9]–जनक[10]गोत्रेणोपनय-

1 G द्व्यामुष्यायणत्वज्ञानार्थत्वात्.
2 B, C, D, E, F, H, K अत्र केवल०.
3 F omits यत्तु...सापिण्ड्यम् (l. 4). G यत्तु गौतमः.
4 दत्त. मी. reads स्वगोत्रेषु for स्वगोत्रेण and गोत्रतां यान्ति; निर्णय० reads स्वगोत्रेषु.
5 दत्त. मी. reads सप्तमी तद्वद्गोत्रं तत्पालकस्य च. D, E, F पालकस्य वा; G पालकस्य तु.
6 B, C, D, E, F अंशपिण्डं विभागित्वम्.
7 G केवलमीरितम्. दत्त. मी. and निर्णय० read ईरितं for इष्यते.
8 G यच्च for यस्तु.
9 G लेखनं for लेखः.
10 G जनकगोत्रेण संस्कृतस्य.

नादिसंस्कृतस्य तु[1] जनककुले पितृतो मातृतश्च पाञ्चपौरुषं साप्तपौरुषं च सापिण्ड्यं प्रतिग्रहीतुः[2] कुले त्रिपुरुषं प्रतिग्रहीतरि[3] पितृत्वप्रयोजकस्योत्पादकत्वस्योपनेतृत्वस्य चाभावात् प्रतिग्रहीतृ[4]गोत्रेण संस्कृतस्य तु प्रतिग्रहीत्रादिभिरेव साप्तपौरुषं पाञ्चपौरुषं च—इति तस्य[5] मूलं न विद्मः। किं च। यदि प्रतिग्रहीतर्युत्पादकत्वोपनेतृत्वाद्यभावान्न पितृत्वं कथं तर्हि त्रिपुरुषं सापिण्ड्यं प्रतिग्रहीत्रादिश्राद्धादिकर्तृत्वं वा दत्तकस्य। न च[6] पितृत्वं सापिण्ड्यसमनियतं येन तदभावात्सापिण्ड्याभावः स्यात्। वस्तुतस्तु—ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः (गौ. ध. सू. ४. ३) इति गौतमादिवचनैः प्रतिग्रहीत्रादिभिः सह सापिण्ड्यं पूर्वमुक्तमेवेति दिक्[7]॥

अथ पुत्रदानप्रतिग्रहविधिः॥ तत्रानेकपुत्राणामज्येष्ठदान एवाधिकारः सर्वेषाम्। प्रतिग्रहे त्वजातपुत्राणां मृतपुत्राणां वा। स्त्रीणां सधवानां भर्तुरनुज्ञया भर्त्रभावे पित्रादीनाम्। शूद्राणां दौहित्रो भागिनेयो वा ग्राह्यो नान्यः। अन्यैस्तु संनिहितः सपिण्डस्तदभावे विप्रकृष्टो न त्वन्यजातीय इति॥ अत्र दाता प्रतिग्रहदिने कालादि स्मृत्वास्मदादीनामस्य च पुत्रस्य परस्परवर्तमानपितृपुत्रादितत्तत्संबन्धनिमित्तकतत्तत्कार्यनिवृत्तये प्रतिग्रहीत्रादीनामस्य च परस्परं पितृपुत्रादितत्तत्संबन्धनिमित्तकतत्तत्कार्यप्रवृत्तये[8] च पुत्रदानं करिष्य

---

1 B, C, D, E, F, H, K omit तु after °संस्कृतस्य.

2 A, B, C, D, E, G, K add तु after प्रतिग्रहीतुः कुले; G प्रतिग्रहीतृकुले.

3 A, B, C, D, E, F, G, H, K, N प्रतिग्रहीतरि गौणपितृत्व°.

4 B, D, E, F, G जनकगोत्रेण for प्रतिग्रहीतृ°.

5 B, C, D, E, F, G, K तत्र मूलम्.

6 E न च पितृत्वव्याप्यं सापिण्ड्यं पूर्वमुक्तं तर्हि त्रिपुरुषं सापिण्ड्यं पूर्वमुक्तं सेवेति (पूर्वमुक्तमेवेति?) दिक्; B, D, F न च पितृत्वव्याप्यं सापिण्ड्यं पूर्वमुक्तमेवेति दिक् (omitting words by oversight); C, K, N न च पितृत्वव्याप्यं सापिण्ड्यं येन तदभावात्; G °पितृत्वव्याप्यं सापिण्ड्यसम°; H न च पितृत्वं सापिण्ड्यं येन.

7 B, D, E, F, G after दिक् read प्रकृतमनुसरामः.

8 C, H, K निवृत्तये for प्रवृत्तये.

इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धादि[1] कुर्यात् । प्रतिग्रहीता[2] तु प्रतिग्रहदिनपूर्वदिन उपोष्यापरदिने बन्धूनाहूय पुत्रप्रतिग्रहं राज्ञे निवेद्य कालादि स्मृत्वा ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं वर्तमानपितृपुत्रादितत्तत्संबन्धनिवृत्तयेऽस्मदादीनां च परस्परं पितृपुत्रादितत्तत्संबन्धनिमित्तकतत्तत्कार्यप्रवृत्तये[3] च पुत्रं प्रतिग्रहीष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धाचार्यवरणकुण्डलाङ्गुलीयकवासोयुगलोष्णीषमधुपर्का[4]द्याचार्यपूजनानि संकल्पपूर्वकं कृत्वा त्रीन्विप्रान्बन्धूंश्च भोजयेत् । अथाचार्यः स्वकर्म करिष्य इति संकल्प्य स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वान्वाधाने चक्षुषी आज्येनेत्यन्तमुक्त्वा अत्र प्रधानमग्निं वायुं सूर्यं प्रजापतिं चैकैकयाहुत्याग्निमेकया [5]सूर्यासावित्रीं च षड्भिश्चर्वाहुतिभिर्यक्ष्ये शेषेण स्विष्टकृतमित्याद्याज्योत्पवनान्तं कुर्यात् । अथ प्रतिग्रहीता दातृनिकटे गत्वा पुत्रं देहीति याचयेत् । दाता तु ये [6]यज्ञेन (ऋ. सं. १०. ६२ १–५) इति ऋक्पञ्चकमुक्त्वा कालादि स्मृत्वास्मदादीनामित्यादि प्रवृत्तय इत्यन्तमुक्त्वा अमुं पुत्रं यथाशक्त्यलंकृतं तुभ्यमहं संप्रदद इति वदेत् । ये यज्ञेन–इति पञ्चानां मानवपुत्रो नाभानेदिष्ठो विश्वे देवा जगती पुत्रदाने विनियोगः । प्रतिग्रहीता तु देवस्य त्वा ( काठकसं १. २; आश्व. गृ. सू. १. २०. ४ ) इत्यनेन प्रतिगृह्य स्वशाखोक्तां कामस्तुतिं पठित्वा अङ्गादङ्गादित्यृचं[7] जपित्वा पुत्रं मूर्धन्याघ्राय वस्त्रादिभिरलंकृत्य मङ्गलशब्दैर्गृहान्तर्नयेत् । अथाचार्य आज्यस्थापनाद्याज्यभागान्तं कृत्वाज्येनैव व्यस्तसमस्तव्याहृतिभिर्हुत्वा चरुणा जुहुयात् ।

---

1 C, K ०श्राद्धानि for श्राद्धादि.

2 N omits प्रतिग्रहीता तु…पुत्रप्रतिग्रहम्.

3 C, H, K निवृत्तये for प्रवृत्तये.

4 A, H, K, N मधुपर्कादिभिराचार्यपूजनानि.

5 A सूर्या सावित्रीं च.

6 C यो यज्ञेन.

7 C अङ्गादङ्गादित्यृचं च जप्त्वा.

यस्त्वा हृदा वसुश्रुतोग्निस्त्रिष्टुप् पुत्रप्रतिग्रहप्रधानचरुहोमे विनियोगः। यस्त्वा हृदा० ( ऋ. सं. ५. ४. १० ) अग्नय इदं न ममेति त्यागः[1]। तुभ्यमग्न[2] इत्यस्य सूर्यासावित्री सूर्यासावित्र्यनुष्टुप्। तुभ्यमग्ने० ( ऋ. सं. १०. ८५. ३८ ) सूर्यासावित्र्या[3] इदं न मम। सोमो ददिति पञ्चानां ( ऋ. सं. १०. ८५. ४१–४५ ) सूर्यासावित्री सूर्यासावित्र्यनुष्टुप्। विनियोगः प्राग्वत्। सोमो ददत्०। ततः स्विष्टकृदादि समापयेदिति विधिः॥

प्रकृतमनुसरामः॥ ऋणविभागे विशेषमाह कात्यायनः

पित्र्यं पित्र्यर्णसंबद्ध[4]मात्मीयं चात्मना[5] कृतम्।
ऋणमेवं[6]कृतं शोध्यं विभागे बन्धुभिः सह॥

पित्र्यर्णसंबद्धं[7] पितुऋणापाकरणार्थं कृतम्। आत्मीयं स्वकुटुम्बभरणार्थ[8]मन्येन कृतम्। स एव

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम्।
विभागकाले देयं तद्रिक्थिभिः सर्वमेव तु॥

रिक्थादल्पर्णविषयेपि स एव

ऋणं प्रीतिप्रदत्तं[9] तु दत्त्वा शेषं विभाजयेत्।

प्रदत्तं प्रतिश्रुतम्। नारदः ( १६. ३२ )

1 C adds एवमग्नेपि after त्यागः.
2 H, K तुभ्यमग्ने.
3 C, K ०सावित्र्यै इदं.
4 A, M पित्र्यर्णसंबन्धम्.
5 C, K वात्मना for चात्मना.
6 B, D ऋणमेव; E ऋणमेककृतम्. F omits ऋणमेवं...मन्येन कृतम्.
7 A, M ०पित्र्यर्णसंबन्धम्.
8 G भरणार्थमन्येन.
दत्त. च० reads प्रीतिप्रदानं for प्रीतिप्रदत्तम्.

यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत् ।
भ्रातृभिस्तद्विभक्तव्यमृणी स्याद[1]न्यथा पिता ॥

पितृदायः पित्रा प्रतिश्रुतम् । स एव

धर्मार्थं प्रीतिदत्तं च यद्दणं स्वे[2]न योजितम् ।
तद्दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥

धर्मार्थं प्रीत्या च यद्दत्तं दातुं प्रतिश्रुतं पित्रा स्वेन योजितं स्वयं कृतम् । तद्दणं दृश्यमानं च द्रव्यं विभजेत् । एतद्दणातिरिक्तस्य पैतृकाद्ध[3]नाद्दानं नास्तीत्यर्थः ॥ अदृश्य[4]मानशङ्कायामपि स एव

दृश्यमानं विभज्येत गृहक्षेत्रं चतुष्प[5]दम् ।
गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्तितः ॥
गृहोपस्करवाह्याश्च दोह्या[6]भरणकर्मिणः ।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीन्मनुः ॥

कर्मिणो दासाद्याः । अत एव दिव्यप्रकरणेऽस्मिन्विषये कोश एव नियमित[7]स्तेनैव ।

शङ्काविश्वाससंधाने विभागे रिक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥ इति ॥

अथाविभाज्यम् ॥ मनुः ( ९. २०६ )

1 नारद reads ऋणी न स्याद्यथा पिता.
2 अपरार्क reads स्वनियोजितम् for स्वेन योजितम्.
3 G पैतृकादृणाद्दानम्.
4 F omits अदृश्य...स एव.
5 E चतुष्पथः for चतुष्पदम्.
6 C, E, D दोषाभरण०; C, D, E, F, K ०भरणकर्मभिः; G, N ०कर्मिभिः. अपरार्क, व्य. मा., स्मृतिच० read ०ब्रवीद्भृगुः.
7 B नियमतः; D, E नियमस्तत्रैव.

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत्
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

व्यासः

विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः[1] ॥

सौदायिकं वक्ष्यते । एतच्च पितृद्रव्याविरोधेनार्जितं ज्ञेयम् । तथा च याज्ञवल्क्यः[2] ( २. ११८–११९ )

पितृ[3]द्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।
मैत्रमौद्वाहि[4]कं चैव दायादानां न तद्भवेत् ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्वि[5]द्यया लब्धमेव च ॥

क्रमागतायामुद्धृतायां भुवि विशेषमाह शङ्खः

पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत्क्रमात् ।
यथाभागं लभन्त्यन्ये दत्त्वांशं तु तुरीयकम् ॥

उद्धृतायाश्चतुर्थमंशमुद्धर्त्रे दत्त्वावशिष्टमुद्धर्त्रा सह विभजेयुः ॥ मनुः (अ. ९. २०८; विष्णुध. सू. १८. ४२)

अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

व्यासः

1 E, F स्वरिक्थभिः.
2 B याज्ञवल्कः.
3 G द्रव्याविरोधेनार्जितद्रव्यविषयं ज्ञेयम्.
4 G औद्वाहिकं वापि.
5 E omits (through oversight) विद्यया लब्ध...न तद्दद्यात् (l. 18).

अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् ।
दायादेभ्यो न तद्दद्याद्विद्यालब्धं च यद्धनम् ॥

विद्यालब्धं विशिनष्टि कात्यायनः

परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या ।
तया[1] लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥

एतदेव विशदयति[2] स एव

उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्याद्विभागे न विभज्यते ॥
शिष्यादाचार्यतः[3] प्रश्नात्संदिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च[4] यत् ॥
विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ।
शिल्पिष्वपि हि धर्मोयं मूल्याद्यच्चाधिकं भवेत् ॥
विद्यालब्धं कृतं चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोन्यथा ॥
परं निरस्य यल्लब्धं विद्यया[5] पणपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥
विद्याप्रतिज्ञया लब्धं शिष्यादाप्तं च यद्भवेत् ।
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ॥

उपन्यासः क्रमजटादीनां संकलितानां पाठ इति मदनरत्ने । सभायां

1 B, D, E, F यथा लब्धम्.

2 G विशेषयति for विशदयति.

3 अपरार्क, स्मृतिच०, परा. मा. read आर्त्विज्यतः for आचार्यतः.

4 G प्रध्यायनाच्च for प्राध्ययनाच्च.

5 अपरार्क reads विद्यापणकृतावेव; वि. र. 'विद्यापणकृतं चैव' and स्मृतिच० and परा. मा. 'विद्याबलकृतं चैव'; दायभाग reads विद्यया द्यूतपूर्वकम्.

गूढप्रमेयविवृतिरिति केचित्। पणपूर्वकमुपन्यस्त[1] इत्यन्वयः[2]। शंसनं प्रख्यापनम्। प्राध्ययनं प्रकृष्टाध्ययनम्। शिल्पिष्वपीति अयं विद्याधर्मः शिल्पिष्वपि ज्ञेय इत्यर्थः। मूल्याधिकं पारितोषिकम्। ऋत्विङ्न्याय उपदर्शनम्। अत्र सर्वत्रापि विद्याधिगमे तया द्रव्यार्जने च पितृद्रव्याविरोधे सत्येवाविभाज्यत्वं विरोधे तु विभाज्यमेव ॥ अत एव कात्यायनः

कुले विनीतविद्यानां भ्रातॄणां पितृतोपि वा।
शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥

पितृद्रव्यविरोधेप्यर्जकस्यांशद्वयमस्त्येव। येन चैषां स्वयमुपार्जितं[3] स्यात्स द्व्यंशमेव हरेद् इति वसिष्ठोक्तेः (वसिष्ठध. सू. १७. ५१)। कस्मिंश्चिद्विद्याधने विशेषमाह नारदः (१६. १०)

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोपि सन् ॥

अश्रुतोविद्य इति मदनरत्ने। भागं दास्यामीत्यप्रतिश्रुत इति तु युक्तम्॥ पितृद्रव्या[4]विरोधार्जिते विशेषमाह गौतमः (गौ. ध. सू. २८. २८)– स्वमर्जितं[5] वैद्यो वैद्येभ्यः कामं दद्यात् इति। विद्यां वेत्तीति वैद्यः। स[6] इच्छया विद्वद्भ्यो भ्रातृभ्यो दद्यादित्यर्थः। कात्यायनः

नावैद्यानां तु वैद्येन देयं विद्याधनं क्वचित्।
समविद्याधिकानां तु देयं वैद्येन तद्भवेत् ॥

---

1 C, D, E, F, G, H, K पणपूर्वमुप०.

2 B, C, D, F, G, H, K ०न्यस्तमित्यन्वयः.

3 B, D, E, F स्वमुपार्जितम्. वसिष्ठध. सू. reads उत्पादितं for उपार्जितम्.

4 B, C, D, E, F, G, H, K र्जितेपि विशेष०.

5 H reads स्वमर्जितं वैद्येन देयं (omitting a few lines).

6 D, E, F omit सः before इच्छया.

वैद्यो वैद्याय[1] नाकामो दद्यादंशं स्वतो धनात् ।
पितृद्रव्यं[2] समाश्रित्य न चेत्तेन तदाहृतम् ॥ ( the last is नारद १६. ११)

अयं च निषेधो विद्यमानभ्रातॄणां धनान्तरसत्त्वे । धनान्तराभावे तु तेभ्योपि देयमेवेति मदनः ॥ पित्रादिदत्तस्याविभाज्यत्वमाह बृहस्पतिः

पितामहपितृभ्यां च दत्तं मात्रापि यद्भवेत् ।
तस्य[3] तन्नापहर्तव्यं शौर्यभार्याधने तथा ॥

नारदः ( १६. ६.)

शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च वै पितुः ॥

कात्यायनः

ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ।
संग्रामादाहृतं यच्च विद्राव्य द्विषतां बलम् ॥
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥

स एव

आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन्[4]कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥
तत्र लब्धं तु यत्किंचिद्धनं शौर्येण तद्भवेत् ॥

अत्र विशेषमाह व्यासः

साधारणं समाश्रित्य यत्किंचिद्वाहनादिकम् ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः ॥

---

1 E omits वैद्याय नाकामोदद्यात्.

2 नारद reads पित्र्यं द्रव्यं and so do अपरार्क, दायभाग.

3 E omits तस्य तन्नाप...धनं भवेत् ( l. 9 ).

4 D, E, F कस्मिन्कर्मणि for तस्मिन्कर्मणि.

सौदायिकस्वरूपमाह व्यासः

ऊढया कन्यया वापि पत्युः पितुर्गृहादपि ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥

कात्यायनः[1]

यल्लब्धं[2] लग्नकाले तु स्वजात्या कन्यया सह ।
कन्यागतं तु तद्वित्तं शुद्धं वृद्धिकरं[3] स्मृतम् ॥
वैवाहिकं तु तद्विद्या[4]द्भार्यया यत्सहागतम् ।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधनम्[5] ॥

आदायार्षस्तु गोद्वयम् (याज्ञवल्क्य १. ५९)—इति प्रकारेण लब्धं कन्यागतम् । अत्रापि विद्याधनवदेव पितृद्रव्याविरोधश्चेदविभाज्यत्वम् । विद्यादिव्यतिरिक्तप्रकारेण तु लब्धं विभाज्यमेव । तथा च मनुः ( ९. २०५ )

अविद्यानां तु सर्वेषामीहात[6]श्चेद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥

ईहा कृष्यादिचेष्टा । अपित्र्ये पितृद्रव्यानाश्रयणे ॥ अन्यदप्यविभाज्यमाह मनुः ( ९. २१९; विष्णुध. सू. १८. ४४ )

वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥

---

1 F omits a long passage from कात्यायनः.

2 B, C, D, E, G, H, K, N यल्लब्धं लाभकाले. स्मृतिच० reads दानकाले for लग्नकाले.

3 B, D, E वृत्तिकरम्.

4 A विन्द्यात् for विद्यात्.

5 E ०सादनं for ०साधनम्.

6 E ईहातश्च तद्धनं.

पत्रं वाहनम् । वस्त्रपत्रालंकारा ये येन धृतास्ते तस्यैव सममूल्याश्चेत् । न्यूनाधिकमूल्यास्तु विभाज्या एव । पितृधृतं[1] तु वस्त्रादि तच्छ्राद्धभोक्त्रे देयम् ।

वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥ इति

बृहस्पत्युक्तेः ॥ विषमेष्वजादिषु विशेषमाह मनुः ( ९. ११९ )

अजाविकं सैकशफं न जातु विषमं[2] भजेत् ।
अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥

कृतान्नोदके यथासंभवमुपयोज्ये । स्त्रियो दास्यो विषमा यथासंभवं कर्म कारणीयाः[3] । समास्तु विभाज्याः । पित्रवरुद्धास्तु समा अपि न विभाज्याः । स्त्रीषु च संसक्तास्वविभागः—इति गौतमोक्तेः ( गौ. ध. सू. २८. ४५ ) । योगक्षेमशब्देन मन्त्रिपुरोहितादय उच्यन्त इति कल्पतरौ । लौगाक्षिस्तु

क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये तु ते प्रोक्ते शयनासनमेव च ॥

इत्याह । तत्र पूर्तं तडागारामादि । इष्टं यागविप्रभोजनादि । तदर्थमविभागदशायां सर्वानुमत्या यद्द्रव्यं येनोत्सृज्य पृथक् स्थापितं तेन द्रव्येण स धर्मस्तेनैव कार्यो नान्येन न वा संभूय सर्वैरित्यर्थः । प्रचारो गृहादिमार्गः गवादिप्रचारार्था भूश्च ॥ यत्तु शङ्खलिखितौ—न वास्तुविभागो नोदपात्रालंकारोपयुक्तवाससाम्—इति यच्च[4] व्यासः

1 H पितृधनं तु for पितृधृतं तु.

2 B, D, E विषमे for विषमम्. मनु॰ reads अजाविकं तु विषमम्. The मिताक्षरा, मदनपारिजात read as in the text.

3 E करणीयाः for कारणीयाः.

4 B, D, E यच्च व्यासोशनसौ for यच्च व्यासः.

अविभागः[1] सगोत्राणामासहस्रकुलादपि ।
याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः ॥ इति

वास्तुक्षेत्रयोरविभाज्यत्वमाहुः[2]स्तद्धर्मवास्तुगोप्रचारक्षेत्रादिपरम् । प्रतिग्रहोपात्तयोस्तयोः क्षत्रियादिविभागप्रतिषेधपरं[3] पूर्वोक्तनिषेधात् । अल्पमूल्ययोर्मूल्येन विभागो न स्वरूपत इत्येवंपरं वा । वस्त्रादिषु विशेषमाह बृहस्पतिः

वस्त्रादयोविभाज्या यैरुक्तं तैर्न[4] विचारितम् ।
धनं भवेत्समृद्धानां वस्त्रालंकारसंश्रितम् ॥

मध्यस्थितमनाजीव्यं दातुं नैकस्य शक्यते ।
युक्त्या विभजनीयं तदन्यथानर्थकं भवेत् ॥

विक्रीय वस्त्राभरणमृणमुद्राह्य लेखितम्[5] ।
कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यते ॥

उद्धृत्य कूपवाप्यम्भः[6] स्वानुसारेण भुज्यते ।
एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे ॥

बह्व्यः समांशतो[7] देया दासानामप्ययं विधिः ।
यथाभागानुसारेण सेतुः क्षेत्रं विभज्यते ॥

प्रचारश्च यथांशेन कर्तव्यो रिक्थिभिः सदा ॥ इति ।

---

1 The मिता०, वि. र., मद. पा., दायभाग read अविभाज्यं for अविभागः.
2 D, E आहतुः; G आह.
3 D, E ०निषेधपरं for प्रतिषेधपरम्.
4 D, E तेन विचारितम्.
5 B लेखितः for लेखितम्.
6 E व्याप्यन्तः स्वानु० for वाप्यम्भः स्वानु०.
7 B, E समांशेनादेया for समांशतो देया.

[1]उद्ग्राह्येति अधमर्णादुद्धृत्येत्यर्थः ॥ कात्यायनः

धनं पत्रनिविष्टं तु धर्मार्थं यन्निरूपितम् ।
उदकं चैव दासश्च निबन्धो यः क्रमागतः ॥
[2]धृतं वस्त्रमलंकारो नानुरूपं तु यद्भवेत् ।
यथा कालोपयुक्तानि तथा योज्यानि बन्धुभिः ॥ इति ।

धनमिति [3]धर्मांशेनोत्सृज्य पत्रे लिखितमित्यर्थः । उदकं कूपादिगतम् । निबन्धो वृत्तिः । नानुरूपं विभागा[4]योग्यम् ॥

भ्रात्रादिवञ्चनया स्थापितद्रव्यस्य विभागमाह याज्ञवल्क्यः (२. १२६)

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥

अन्योन्यापहृतं ज्येष्ठकनिष्ठाद्यपहृतम् ॥ यत्तु मनुः (९. २१३)

[5]यो लोभाद्विनिकुर्वीत ज्येष्ठो भ्रातॄन्यवीयसः ।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः ॥ इति

तत्रापि ज्येष्ठपदं [6]दण्डापूपिकन्यीत्या दायादमात्रोपलक्षकम् । ज्येष्ठस्यापि दोषः किमुत यवीयसामित्यर्थः । अत एव गौतमः (ऐ. ब्रा. २. १. ७) यो वै भागिनं भागान्नुदते चयत एवैनं [7]स यदि चैनं न

1 D, E omit उद्ग्राह्येति.
2 B, D, E धृतवस्त्रं for धृतं वस्त्रम्.
3 B, D, E धर्मोद्देशेन.
4 C, K विभागयोग्यम्.
5 B, D, E यो ज्येष्ठो विनिकुर्वीत लोभाद् भ्रातॄन्. This is the reading of the मनुस्मृति also.
6 D, E दण्डोपूपिकन्यीत्या; C दण्डापपूपिकीन्यीत्या (? दण्डापूपिकी).
7 D, E omit स यदि चैनम्.

चयतेथ पुत्रमथ पौत्रं चयते—इति । भागिनं भागार्हं भागाद्नुदतेपाकरोति स नुन्न एनं नोत्तारं चयते नाशयति । यदि तं न नाशयति तत्पुत्रं पौत्रं वा नाशयतीत्यर्थः ॥ नारदः

विभक्तेनैव यत्प्राप्तं तत्तस्यैव धनं भवेत्[1] ।
हृतं नष्टं च यल्लब्धं प्रागुक्तं च पुनर्भवेत् ॥ इति ।

प्रागुक्तं दायादमध्ये केनचित्प्रच्छादितम् । पुनर्भवेद्विभाग इति शेषः ॥ मनुः

विभागे तु कृते किंचित्सामान्यं यत्तु दृश्यते ।
नासौ विभागो विज्ञेयः कर्तव्यः पुनरेव हि ॥ इति ॥

केनचिद्विभागस्यापलापे निर्णायकान्याह याज्ञवल्क्यः (२. १४९)

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥

यौतकैः पृथग्दत्तैर्[2]गृहक्षेत्रैरिति विशेषणविशेष्यभावः । नारदः ( १६. ३६ )

विभागधर्मसंदेहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥

स एव ( नारद १६. ३७ )

भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोपि भवेत्तेषां पृथक्पृथक् ॥

अत्राविभक्तानामित्येवोद्देश्यसमर्पकम् । भ्रातृणामिति तु तद्विशेषणत्वादविवक्षितम् । तेन पितृपितामहपुत्रपौत्रपितृव्यभ्रातृ[3]भ्रातृपुत्रादिष्वप्य-

---

1 स्मृतिच० reads भजेत् for भवेत्.

2 B, D, E पृथक्कृतैः.

3 E omits भ्रातृ before भ्रातृपुत्र.

विभक्तेष्वेक एव धर्मः ॥ अत्र देशकालकर्त्रादीनामैक्ये[1] कर्मणोनेकप्रयोगविषयिणी न्यायेन प्राप्तापि तन्त्रताविभक्तकर्तृभेदेपि वचनेन बोध्यते । तेन श्रौतस्मार्ताग्निसाध्यास्तावद्धर्मा अविभक्तानां पृथगेव । आहवनीयत्वावसथ्यत्वादीनां[2] ससंबन्धिकत्वेन[3] भेदात् । एवं श्राद्धमपि पितृव्यभ्रातृपुत्रादीनाममावास्यादौ देवताभेदात्पृथगेव । भ्रातॄणां तु निरग्निकानां तन्त्रेणैव[4] देवतैक्यात् । प्रवासादिना देशभेदे तु पृथगेव । साग्निकानामग्निसाध्यान्यपि[5] पृथगेव । गृहदेवतापूजावैश्वदेवादि[6] तु तन्त्रेणैव । अत एव शाकलः

एकपाकेन वसतामेकं देवार्चनं गृहे ।<br>
वैश्वदेवं तथैवैकं विभक्तानां गृहे गृहे ॥ इति[7] ।

यत्तु पारिजाते आश्वलायनः

एकपाकेन वसतां विभक्तानामपि प्रभुः ।<br>
एकस्तु चतुरो यज्ञान् कुर्याद्वाग्यज्ञपूर्वकान् ॥<br>
अविभक्ता विभक्ताश्च पृथक्पाका द्विजातयः ।<br>
कुर्युः पृथक्पृथग्यज्ञान् भोजनात्प्राग्दिने दिने ॥ इति

तत्संसृष्टिपरम् । विभक्तानामप्येकपाकेन[8] वसतामित्यनेन[9] विभक्ता अविभक्ताश्चेत्यनेन च तत्प्रतिपादनात् । अतः संसृष्टिनां कदाचित्पृथक्पाके पृथग्ब्रह्मयज्ञाः । वाग्यज्ञो ब्रह्मयज्ञः । तत्पूर्वकानित्यतद्गुणसं-

1 B, D, E ऐक्येनेकप्रयोगविषयिणि कर्मणो न्यायेन.

2 C, G, K ०वसथ्यादीनाम्.

3 A संबन्धिकत्वेन; C, K ससंबन्धिकत्वे भेदात्.

4 D तन्त्रेणेव.

5 B, D, E ०साध्यानि तु पृथगेव.

6 B, D, E, H, K गृहस्थदेवता; G गृहस्त०.

7 D, F गृहेति प्रयोगपारिजाते.

8 A, B, D, E अविभक्तानामपि for विभक्तानामपि.

9 D, E ०नेन विभक्ताश्चेत्यनेन.

विज्ञानः । तद्गुणसंविज्ञाने तु वाग्यज्ञेत्याद्यनर्थकं प्रथमत्यागे कारणाभावात्–इति न्यायादेव चतुर्णां प्राप्तिसंभवात् । अतो ब्रह्मयज्ञः पृथगेव कार्यः । इदं तु वचनद्वयं शिष्टैस्तथा नाद्रियते ॥ यानि तु धर्मप्रवृत्तौ वचांसि

अविभक्ताः सुता[1]ः पित्रोरेकं कुर्युर्मृताहिकम् ।
देशान्तरे पृथक्कुर्युर्दर्शश्राद्धानुमासिकम् ॥
ग्रामान्तरं व्रजेयुश्चेदविभक्ताः सदैव हि ।
दर्शं च मासिकं श्राद्धं कुर्युः पित्रोः पृथक्पृथक् ॥
अविभक्ताः पृथग्ग्रामाः स्वस्वार्जितधनाशिनः ।
कुर्युस्ते भ्रातरः श्राद्धं पार्वणं च पृथक्पृथक् ॥ इति

यच्च स्मृतिसमुच्चये

वैश्वदेवः क्षयाहश्च महालयविधिस्तथा ।
देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च ॥ इति

तान्यपि देशान्तरस्थसं[2]सृष्टविषयाणीति केचित् । वस्तुतस्त्वेतानि निर्मूलान्येव । अथवा देशकालकर्त्रादीनामैक्ये न्यायेन प्राप्ता तत्रता कर्तृभेदे तु वाचनिकी देशभेदे तु वचनस्य न्यायस्य चाभावात्पृथगेव [3]श्राद्धादीनीति युक्तिमूलकानि केनचित्कृ[4]तानीति दिक् ॥ अन्यान्यपि विभागलिङ्गान्याह नारदः ( १६. ३०, ३८, ४० )

साक्षित्वं प्रातिभा[5]व्यं च दानं ग्रहणमेव च ।
वि[6]भक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥

---

1 H omits सुताः...अविभक्ताः (l. 9).
2 B देशान्तरस्थासंसृष्ट०; C, G, K ०स्थसंसृष्टि०.
3 B, D, E श्राद्धादीति युक्ति०.
4 D, E omit इति दिक्.
5 A, K, M प्रातिभाव्यं तु; A, C, E, M दानग्रहण०.
6 E omits विभक्ता भ्रातरः...प्रतिग्रहाः.

दानग्रहण[1]पश्वन्नगृहक्षेत्रप्रतिग्रहाः ।
विभक्तानां पृथग्ज्ञेया दान[2]धर्मागमव्ययाः ॥
येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थिषु ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान् ॥ इति ।

दान[3]ग्रहणे ऋणविषये । ते एव दानग्रहणे द्वितीयश्लोकेनूद्येते [4]स्पष्टतार्थम् । पश्वादिप्रतिग्रहा विभक्तानां पृथक्पृथगनुष्ठिता एव स्वत्वोत्पादकाः । अविभक्तानां त्वेकेन कृताः परस्यापि स्वत्वजनका इत्यर्थः । दानधर्मो लेख्यादिः । आगमो मूलकलाप्रवेशादिः ॥ [5]बृहस्पतिः

पृथगा[6]यव्ययाधानं कुसीदं च परस्परम् ।
वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः ॥

वणिक्पथं वाणिज्यम् ॥ याज्ञवल्क्यः ( २. ५२ )

भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥

एतल्लिङ्गाभावे तु दिव्यम् । एषामन्यतमाभावे दिव्यान्यतममुच्यते ( याज्ञवल्क्य २. २२ )—इति तेनैवोक्तत्वात् ॥ यत्तु वृद्धयाज्ञवल्क्यः

विभागधर्मसंदेहे बन्धुसाक्ष्यभिलेखितैः ।
विभागभावना कार्या न भवेद्दैविकी क्रिया ॥ इति

तल्लिङ्गान्तरसद्भावपरम् । कथंचिदपि विभक्ताविभक्तसंदेहानपगमे पुनर्विभागमाह मनुः

---

1 अपरार्क reads दारग्रहण० and क्षेत्रपरिग्रहाः. वि. र., वीर० read ०परिग्रहाः.

2 अपरार्क, वि. र., वीर० read पाकधर्मा० for दानधर्मा०.

3 C एते एवं दानविषये ग्रहणे; D, E दानग्रहणे ऋणविषयः.

4 E स्पष्टतार्थः; K स्पृष्टतार्थम्.

5 E omits बृहस्पतिः...संशयः.

6 अपरार्क, स्मृतिच०, परा. मा., वि. र., वीर० read पृथगायव्ययधनाः.

विभागे यत्र संदेहो दायादानां परस्परम् ।
पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि ॥

विभक्तकृत्यमाह नारदः ( १६. ४२–४३ )

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत्कार्येषु संमताः[1] ॥
स्वभावाद्यदि[2] दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वा ॥ इति ।

धर्मा वैधाः पञ्चमहायज्ञाद्याः[3] । क्रिया वाणिज्याद्या लौकिक्यः[4] । कर्मगुणाः कर्मसाधनानि गृहोपस्करादीनि । एतेषां पार्थक्येन विभागो लक्ष्यते । ते विभक्ताः परस्परानुमतिं विनापि दानविक्रयादि[5] कुर्युरित्यर्थः ॥ यत्तु बृहस्पतिः

अविभक्ता[6] विभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥ इति

तद्द्व्यांशे विभक्तानामप्यविभक्तक्षेत्राद्युत्पन्नसस्यादिदानादावनुमतिं विनाधिकारप्रतिषेधार्थमिति मदनः विभक्ताविभक्तसंदेहनिरासार्थं[7] विभक्तानुज्ञया व्यवहारसौकर्यार्थमिति विज्ञानेश्वरादयः । स्वेच्छया विभक्तं पुनश्च विवदमानं प्रत्याह स एव

---

1 D, E संगताः for संमताः. नारद reads न ते कृत्येषु संमताः. The मद. पा., वि. र. read संगताः for संमताः.

2 नारद, स्मृतिच०, वीर० read स्वान्भागान्यदि दद्युस्ते; अपरार्क reads स्वभागान्यदि वा दद्युः; वि. र. reads स्वभागान्यदि ते दद्युः.

3 D, E पञ्चयज्ञाद्याः.

4 C लौकिका कर्मगुणाः.

5 D दानक्रियादि.

6 अपरार्क reads विभक्ता वाविभक्ता वा. मिता reads सपिण्डाः for दायादाः.

7 B, D ०निरासार्थं विभागो यः उक्तानुज्ञया व्यवहार०.

स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञांशे स्वके स्थाप्यः शासनीयोनुबन्धकृत् ॥

अनुबन्धो निर्बन्धः ॥

अथ सप्रतिबन्धदाय[1]हरणक्रमः ॥ तत्र विभक्तस्यासंसृष्टिनो धनग्रहणे क्रममाह याज्ञवल्क्यः ( २. १३५–१३६ )

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥ इति ।

पत्नी पतिव्रता[2] धन[3]हारिणी न व्यभिचारिणी । पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी–इति कात्यायनोक्तेः ।

वि[4]धवा यौवनस्था चेन्नारी भवति कर्कशा ।
आयु[5]षः क्षपणार्थं तु दातव्यं जीवनं तदा ॥ इति

हारीतोक्तेः ( लघुहारीत ६७ ) । प्रजापतिः

पूर्वं मृता त्वग्निहोत्रं मृते भर्तरि तद्धनम् ।
लभेत्पतिव्रता नारी धर्म एष सनातनः ॥

अग्निहोत्रमग्नीन् । स एव

ज[6]ङ्गमं स्थावरं सर्वं कुप्यं हेमरसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषा[7]ण्मासिकाब्दिकम् ॥

---

1 D, E, F ०दायहरक्रमः विभक्तस्य.

2 D, E, F पतिव्रतैव.

3 B, D, E, F धनग्राहिणी.

4 E omits विधवा…हारीतोक्तेः.

5 D, F, K आयुष्यक्षपणार्थम्.

6 B, D, E, F स्थावरं जङ्गमं हेमं कुप्यं हेम० ( B हेमकुप्यं ). The दायभाग and स्मृतिच० read स्थावरं हेम कुप्यं धान्यं रसाम्बरम्; अपरार्क reads स्थावरं हेम रूप्यधान्यरसा०.

7 स्मृतिच०, अपरार्क and दायभाग read षाण्मासिकादिकम्; परा. मा. reads माससंवत्सरादिकम्.

पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् ।
[1]पूजयेत्कव्यपूर्ताभ्यां वृद्धां[2]श्चाप्यतिथीन् स्त्रियः ॥ इति ।

कुप्यं त्रपुसीसादि ॥ यत्तु बृहस्पतिः

यद्विभक्ते धनं किंचिदाध्या[3]दि विविधं स्मृतम् ।
तज्जाया स्थावरं मुक्त्वा लभेत मृतभर्तृका ॥
वृत्तस्थापि कृतेप्यंशे न स्त्री स्थावरमर्हति । इ[4]ति

तद्दुहितृरहितपत्नीपरम् । दुहितृमती तु स्थावरमपि लभत इति [5]स्मृतिचन्द्रिकायाम् । दायादानुमतिं विना स्थावरविक्रया[6]दिनिषेधपरमिति माधवः ॥ यत्तु कात्यायनः

मृते भर्तरि भर्त्रंशं लभेत कुलपालिका ।
यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये ॥ इति

तद्वन्दिचारणाद्यर्थदानादिनिषेधपरम् । अदृष्टार्थदानतदुपयोग्याधमनादि तु भवत्येव । स्थावरं जङ्गमं च—इत्यादिपूर्वोक्तवाक्यात् ।

व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता ।
दमदानरता नित्यमपुत्रापि दिवं व्रजेत् ॥ इति

कात्याय[7]नाच्च । यदपि स एव

1 D, E, F पूरयेत् for पूजयेत्.
2 अपरार्क, दायभाग, वि. र. read वृद्धानाथातिथीन् स्त्रियः; स्मृतिच० 'वृद्धानाथातिथींस्तथा'; परा. मा. 'वृद्धानप्यतिथींस्तथा'.
3 B, D, E आयादि for आध्यादि.
4 A, G, M omit इति after अर्हति. C, K after अर्हतीति read तद्दुहितृमती तु.
5 F चन्द्रिकायां for स्मृतिचन्द्रिकायाम्.
6 B, D, E, F ०विक्रयादिपरम्.
7 B, C, D, E, F, K कातीयाच्च.

अदायिकं[1] राजगामि योषिद्भृत्यौर्ध्वदेहिकम् ।
अपास्य श्रोत्रियद्रव्यं[2] श्रोत्रियेभ्यस्तदर्पयेत् ॥ इति

यदपि नारदः ( १६. ५२ )

अन्यत्र ब्राह्मणात्किंचिद्राजा धर्मपरायणः[3] ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥ इति

तदवरुद्धस्त्रीपरम् । पत्नीपदाश्रवणात् । यत्तु नारदः ( १६. २५–२६ )

भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा ।
विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु[4] तु ॥ इति

तदविभक्तसंसृष्टमृतस्त्रीपरं तत्प्रक्रमे पाठादिति मदनः ॥ कात्यायनः[5]

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी ।
अविभक्ते धनांशं[6] तु प्राप्नोत्यामरणान्तिकम् ॥

अविभक्तपदं संसृष्टस्याप्युपलक्षणम्[7] । तुशब्दो वाशब्दार्थे । तेन पक्षद्वयम् । तत्रान्त्यः पत्नीपर आद्योवरुद्धापर इति मदनः ॥ एतद्व्यवस्थामूलं[8] चिन्त्यम् । तात्त्विकीं तु व्यवस्थामाह स एव

---

1 B, C, D, E, F, G, K अदायकम्.
2 C, F omit श्रोत्रियद्रव्यम्.
3 B यमपरायणः for धर्मपरायणः.
4 A, C, G, H, K इतरास्विति; G, K इति तु तदविभक्त°.
5 E omits कात्यायनः.
6 E धनांशे for धनांशम्.
7 B, C, D, E, F, H, K °स्याप्युपलक्षकम्.
8 E, F °मूलं तु चिन्त्यम्.

भोक्तुमर्हति कृत्स्नांशं गुरुशुश्रूषणे रता ।
न कुर्याद्यदि शुश्रूषां [1]चैलं पिण्डं नियोजयेत् ॥ इति ।

गुरुः[2] श्वशुरादिः । तदिच्छायामंशभाक्त्वमन्यथा ग्रासाच्छादनमात्रमित्यर्थः ॥ स एव

अपकारक्रियायुक्ता निर्लज्जा [3]चार्थनाशिनी ।
व्यभिचाररता या च स्त्री धनं न[4] च सार्हति[5] ॥

यत्तु

एवमेव[6] विधिं कुर्याद्योषित्सु पतितास्वपि ।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके ॥ ( मनु. ११. १८८ ) इति

तद्भर्तृपरमिति ग्रन्थकृतः । [7]एवं विधिं पतितत्यागरूपम् ॥ शङ्कितव्यभिचाराया अपि भरणमात्रमेव

विधवा यौवनस्था चेन्नारी भवति कर्कशा ।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ॥ इति

हारीतोक्तेः । कर्कशा शङ्कितव्यभिचारेति मिताक्षरायाम् ॥ तत्सिद्धं संयता पत्नी धनग्राहिणीति । अनेकास्तु ता विभज्य गृह्णीयुः ॥

तस्या अभावे दुहिता । अत एव मनुः ( ९. १३० )

1 E omits चैलं...चाररता या. The स्मृतिच० reads चेलपिण्डे नियोजयेत्.
2 B, D, F omits गुरुः...च्छादनमात्रमित्यर्थः.
3 B, D, F वार्थनाशिनी.
4 D, E, F नैव सार्हति for न च सार्हति.
5 B, D, E, F after सार्हति read नारदः । भरणं चास्य...तरासु त्विति.
6 A, M एतमेव for एवमेव.
7 G एवं विधिपरित्याग०.

यथैवात्मा[1] तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥

दुहितरोनेकाश्चेद्विभज्य गृह्णीयुः । तत्रापि काचिदूढा[2] काचिदनूढा चेदनूढैव

पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥ इति

कात्यायनीयात्[3] । ऊढासु काचित्सधना परा निर्धना चेत्सैव लभेत । स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च—इति गौतमोक्तेः ( गौ. ध. सू. २८. २२ ) । अप्रतिष्ठिता निर्धनाः । स्त्रीपदं पितुरप्युपलक्षकमिति सांप्रदायिकाः ॥

दुहित्रभावे दौहित्रः ।

अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः[4] ।
पूर्वेषां तु स्वधाकारे पौत्रा[5] दौहित्रका मताः ॥ इति

दौहित्राभावे पिता । तदभावे माता । तथा च कात्यायनः

अपुत्रस्यास्य[7] कुलजा पत्नी दुहितरोपि वा ।
तदभावे पिता माता भ्राता[8] पुत्राः प्रकीर्तिताः ॥

---

1 B, D, E, F तथैवात्मा.
2 E, F काचिदूढापरानूढा चेत्.
3 B, C, D, E, F, G, H, K कातीयात्.
4 F omits ०नमाप्नुयुः up to चांशान several pages below.
5 D, E पुत्रा दौहित्रकाः.
6 D, E विष्णुनोक्तेः.
7 मिता० reads अपुत्रस्यार्यकुलजा; परा. मा० reads अपुत्रस्याथ कुलजा.
8 B भ्रातृपुत्राः for भ्राता पुत्राः.

विष्णुश्च ( विष्णुध. सू. १७. ४–११ )–अपुत्रधनं पत्न्यभिगामि । तदभावे दुहितृगामि । तद[1]भावे दौहित्रगामि । तदभावे पितृगामि । तदभावे मातृ[2]गामि । तदभावे भ्रातृगामि । तदभावे भ्रातृपुत्रगामि । तदभावे सकुल्य[3]गामि–इति । यत्तु विज्ञानेश्वरः द्वन्द्वापवादके पितरावित्येकशेषे क्रमाप्रतीतावपि तदर्थबोधके विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादपवाद्यद्वन्द्वक्रमानुसारात्पितुः पुत्रान्तरसाधारण्यान्मातुस्त्वसाधारण्याच्चादौ मातुस्तदभावे पितुर्धनग्रहणमूचे[4] तदेतद्वचोविरोधादपास्तम् । विग्रहवाक्ये मातृशब्दपूर्वनिपात एकशेषस्य द्वन्द्ववैकल्पिकत्वेन तदपवादत्वे साधारण्यासाधारण्ययोः क्रमनियामकत्वे मानाभावाच्च ॥

मातुरभावे भ्राता सोदरः । तदभावे तत्पुत्रः ॥ यत्तु विज्ञानेश्वरादयः सोदराभावे भिन्नोदरास्तदभावे सोदरसुता इत्याहुस्तन्न । भ्रातृपदस्य सोदरे शक्त्या भिन्नोदरे च गौण्या वृत्तिद्वयविरोधात्[5] ॥ केचित्तु भ्रातर इत्यत्र–भ्रातृपुत्रौ स्वसृदुहितृभ्याम्(पा. १.२.६८)–इत्यनुशासनाद् भ्रातरश्च स्वसारश्च भ्रातर इति विरूपैकशेषेण भ्रात्रभावे भगिन्य इत्याहुस्तन्न । विरूपैकशेषे मानाभावात् ॥ भ्रातृपुत्रा अपि पितृव्यमरणकाले जीवत्पितृकतया[6]संजातधनसंबन्धाश्चेत्–अनेकपितृकाणां तु पितृतो भागकल्पना ( याज्ञवल्क्य २. १२० )–इति न्यायेन पित्र्यमंशं पितृव्यान्तरैः सह विभज्य गृह्णीयुः ॥

1 C, D omit तदभावे दौहित्रगामि. The मिता० also omits these words.

2 B मातृगामि तदभावे भ्रातृपुत्रगामि.

3 A, M omit इति after सकुल्यगामि.

4 E उच्यते for ऊचे.

5 B, D, E वृत्तिद्वयविरोधाच्च.

6 B, C, D, E असंज्ञातधन०; K ०पितृकतयासंज्ञानधन०.

भ्रातृपुत्राभावे गोत्रजाः सपिण्डाः । तत्राप्यादौ पितामही । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्—इति मनूक्तेः (९. २१७) । यद्यपीयं मातुरनन्तरं श्रुता तथापि बद्धक्रमभ्रातृपुत्रान्तेषु मध्ये निवेशायोगादागन्तूनामन्ते निवेश इतिवद्भ्रातृपुत्रान्ते निवेश्या ॥

तदभावे भगिनी ॥ अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्—इति मनूक्तेः ( ९. १८७ )

बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोनपत्यधनं हरेत् ॥ इति

बृहस्पत्युक्तेः । तस्या अपि भ्रातृगोत्र उत्पन्नत्वेन गोत्रजत्वाविशेषाच्च । सगोत्रता परं नास्ति । न च सात्र [1]धनग्रहणप्रयोजकत्वेनोक्ता ॥

तदभावे पितामहसपत्नभ्रातरौ विभज्य गृह्णीतः । [2]स्वजनकजनकत्वेन स्वजनकजन्यत्वेन च समानप्रत्यासत्तेः । प्रत्यासत्तिसाम्ये पाठक्रमाद्यणुविशेषान्तराभावे चान्यत्राप्येवमेव तेन तयोर[3]भावे प्रपितामहपितृव्यभिन्नोदरभ्रातृपुत्रा विभज्य गृह्णीयुः । सर्वसपिण्डाः समानोदकाश्च प्र[4]त्यासत्तिक्रमेण । तांश्चाह मनुः ( ५. ६० )

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ इति ।

सप्तमेतीत इत्यर्थः ॥

सोदकाभावे बन्धवः । [5]ते च स्मृत्यन्तरे

---

1 H धनापहरणं प्रयोजकत्वेनो°.
2 D, E omit स्वजनकजनत्वेन; C omits स्वजनकजन्यत्वेन.
3 E omits भावे प्रपिता...प्रत्यास.
4 C adds द्वित्र before प्रत्यासत्ति°.
5 D ते स्मृत्यन्तरे for ते च स्मृ°.

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः[1] ॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

अत्र क्रमः पाठिक एव । ननु पत्न्यादीनां सर्वेषां मृतनिरूपितानामेव धनभाक्त्वं बान्धवानामपि तथैवास्तु । अतः कथं पितुर्मातुश्च बान्धवानां धनसंबन्धः । पितुः पितृष्वसुः पुत्राः—इत्यादि तु संज्ञासंज्ञिसंबन्धमात्रार्थं न धनसंबन्धार्थमिति चेदुच्यते । विनाप्येतद्वचनं पितृमातुल[2]पितृपितृव्यादिष्विव पितृमातृबान्धवेष्वपि योगेनैव तच्छब्दप्रवृत्तिसंभवे संज्ञासंज्ञिसंबन्धबोधनानर्थक्यापत्तिः[3] ॥ तेन बन्धूनुद्दिश्य धनसंबन्धविधौ पितृमातृबन्धुप्रापणेनैव वचोर्थवत्ता । बन्धूद्देशेनाशौचा[4]दिविधावप्येवमेवेति दिक् ॥

बन्धूनामभाव आचार्यः तदभावे शिष्यः— पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभाव आचार्यस्तदभावेन्तेवासी (आप. ध. सू. २. ६. १४. २—३)—इत्यापस्तम्बोक्तेः ॥ शिष्याभावे सहाध्यायी तदभावे श्रोत्रियः—श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्—इति गौतमोक्तेः (गौ. ध. सू. २८. ३९) । तदभावेन्यो ब्राह्मणः ।

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥ इति

1 E आत्मबन्धवः.
2 C मातुलपितृव्यादिष्विव; E पितृपितृमातुल०.
3 A ०नानर्थक्यापत्तेः.
4 D, E आशौचाविधावप्येव०.

कात्यायनीयात्[1] ( = मनु. ९. १८८ ) । नारदश्च

सर्वत्रादायिकं[2] राजा हरेद्ब्रह्मस्ववर्जितम् ।
अदायिकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥

बृहस्पतिः

ये पुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः ।
तेषां धनहरो राजा सर्वस्यापि पतिर्हि सः ॥

यत्यादिरिक्थे विशेषमाह याज्ञवल्क्यः ( २. १३७ )

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

ब्रह्मचारी नैष्ठिकः । उपकुर्वाणस्य तु पित्रादय एव । धर्मभ्राता प्रति[3]-पन्नो भ्राता । एकतीर्थः[4] एकाश्रमी । धर्मभ्राता चासावेकतीर्थी चेति कर्मधारयः । आचार्यादीनां प्रातिलोम्येन[5] क्रम इति विज्ञानेश्वरः । वनस्थस्य[6] धनमाचार्यो गृह्णीयाच्छिष्यो वा ( विष्णुध. सू. १७. १५–१६ )–इति विष्णूक्तेरानुलोम्येनेति मदनः ॥

मृतस्य रिक्थग्राहिणा येन केनापि राजपर्यन्तेनौर्ध्वदेहिकं दशाहान्तं कार्यम् । तथा च विष्णुः ( विष्णुध. सू. १५. ४० ) यश्चार्थहरः स पिण्डदायी स्मृतः–इति । निरूपितं चेदं श्राद्धमयूखेधिकारिनिर्णये मया ॥

अथ संसृष्टिनिर्णयः ॥ तत्र संसर्गमाह बृहस्पतिः

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः ।
पितृव्येणाथ वा प्रीत्या स तत्संसृष्ट उच्यते ॥

---

1 B, C, D, E, G, K कातीयात्.
2 B, C, D, E, G, K सर्वत्रादायकम्.
3 B, D, E, H प्रत्तो भ्राता.
4 G एकतीर्थी.
5 B, D, E, H omit ०लोम्येन क्रम इति...ष्णूक्तेरानु०.
6 G वानप्रस्थधम०. The विष्णुध. सू. reads वानप्रस्थधन०.

अत्र पितृभ्रातृपितृव्यैरेव सह संसृष्टता नान्येन वचनेनुपादानादिति मिताक्षरादिषु । विभागकर्तृसामानाधिकरण्येनैव सेति युक्तम् । पित्रादिपदानि तु विभागकर्तृमात्रोपलक्षकाणि[1] । अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीतिवत् । अन्यथा वाक्यभेदात् । तेन पत्नीपितामहभ्रातृपौत्रपितृव्यपुत्रादिभिरपि[2] सह संसृष्टता भवति । विभक्तो य एकत्र स्थितः स संसृष्ट इति सामानाधिकरण्याद्विभक्तभ्रात्रोः पुत्रादीनां न संसर्गः । विद्यमानं भावि वा धनमावयोः पुनर्विभागावधि साधारणमित्याकारिका बुद्धिरिच्छा वा संसर्गः ॥ तत्र संसृष्टिनां पुनर्विभागे विशेषमाह मनुः

संसृष्टाः[3] सह जीवन्तो विभजेरन्पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥

अत्र समस्तत्र विभागः स्यादित्यनेनैव वैषम्ये निरस्ते पुनर्ज्यैष्ठ्यप्रतिषेधो[4] ज्यैष्ठ्यकृतमेव वैषम्यं नास्ति संसर्गकालिक[5]द्रव्यन्यूनाधिक्यकृतं तु विभागे वैषम्यमस्त्येवेति ज्ञापनार्थमिति[6] केचित् । ज्यैष्ठ्यमित्यादेरर्थवादमात्रत्वात् द्रव्यन्यूनाधिक्येपि सम[7] एव विभागः । आचारोप्येवम् । तेनाचारमूलकत्वेस्य वचसः संभवति तद्विरुद्धश्रुतिकल्पनमन्याय्यम् । व्यवहारशास्त्रस्य व्याकरणवत्प्रायेणाचारमूलकत्वाच्चेति तु परे ॥ बृहस्पतिः

---

1 B, C, D, E, G, H, K ०कर्तृमात्रलक्षकाणि.

2 B ०भ्रातृव्यपुत्रादि०.

3 The मनुस्मृति, विष्णुध. सू. दायभाग, स्मृतिच०, मिता० read विभक्ताः for संसृष्टाः.

4 C omits the words 'प्रतिषेधो ज्यै...संभ०' (l. 16). E omits निरस्ते पुनः...वैषम्य.

5 G, H, K संसर्गकालीन०.

6 E, G, H, K ज्ञापनार्थं इति.

7 B, D, E, H, K सम एव भागः.

संसृष्टिनां[1] तु यः कश्चिद्विद्याशौर्यादिभिर्धनम् ।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः ॥

अर्जकस्य द्वौ भागावित्यनेनैव भागद्वयसिद्धावसंसृष्टविभागे पितृद्रव्याविरोधेनैवार्जने भागद्वयं संसृष्टिभागे तु संसृष्टधनविरोधेनाप्यर्जने भागद्वयमित्यर्थवदेतद्वचनमिति मदनः ॥

संसृष्टिधनहरणाधिकारिणमाह[2] याज्ञवल्क्यः ( २. १३८ )

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ॥

पत्नी दुहितरः (याज्ञवल्क्य २. १३५)—इत्यादेरपवादोयम् । तेनायमर्थः । संसृष्टधनहरणाधिकारितावच्छेदकं न पत्नीत्वादि किं तु संसृष्टत्वमिति । यत्तु विज्ञानेश्वरमदनाद्योपवादस्योत्सर्गसमानविषयत्वनियमात्पूर्वोक्तस्वर्यातस्यापुत्रस्येत्येतत्पदानुषङ्गाच्चैतदपि[3][4] पुत्रपौत्रप्रपौत्रहीनविषयम्[5], अतस्तादृशमृतसंसृष्टिधनसंसृष्टिसंनिहितपत्न्यादिसद्भावेप्यन्यः[6][7] संसृष्टेव गृह्णीयादिति, तच्चिन्त्यम् । तेन विनापि गतौ संभवन्त्यामनुषङ्गे मानाभावात् । समानविषयत्वं तु न सर्वांशेपेक्षितं किं तु यथाकथंचिन्मृतसपिण्डविषयतया । अपुत्रस्येति पदस्यानुषङ्गाभावे स्वर्यातस्येत्यस्याप्यनुषङ्गाभावेन मृतस्येति न लभ्येतेति चेन्न । ह्रीयेतांशप्रदानतो म्रियेतान्यतरो वापि ( मनु. ९. २११ )—इति वक्ष्यमाणमनूक्त्या तल्लाभात् । अनुषङ्गे तु पित्रा सह[8] संसृष्टासंसृष्टिनोः पुत्रयोः पुत्रपौत्र-

1 स्मृतिच० and मदनपारिजात read संसृष्टानां...०दिनाधिकम्. वि. चि. reads संसृष्टानां and वीर० reads ०दिनाधिकम्.

2 B, D, E हरणाधिकारिण आह.

3 A विज्ञानेश्वरः मदनादयः.

4 B, D, E स्वर्यातस्याप्यपुत्रस्य.

5 E पौत्रहीनविषये.

6 D, E, K मृतसंसृष्टिसंनिहित०.

7 G, K पत्न्यादिसद्भावे.

8 D, E पित्रा सह संसृष्टिनोः पुत्रपुत्रयोर्वा.

योर्वा तुल्यांशापत्तिः । सपुत्रं[1] प्रत्येतद्वचनाप्रवृत्तेः । तत्र[2] च व्यवहारशास्त्रप्रामाण्यनिदानव्यवहारविरोधः ॥ नन्वनुषङ्गाभावे[3] सपुत्रं प्रत्यप्येतद्वचनप्रवृत्तेरसंसृष्टिपुत्रसंसृष्टिभ्रात्रादीनां समवाये भ्रात्रादिरेव लभेत न पुत्रादिरिति चेन्न । उत्तरार्धव्याख्यायां परिहरिष्यमाणत्वात् । अमुं प्रथमपादार्थमपवदति सोदरस्येति । संसृष्टिनः[4] संसृष्टीत्यनुषज्यते । मृतसंसृष्टिनो धनं संसृष्टिनोः सोदरासोदरयोः समवाये सोदर एव संसृष्टी गृह्णीयादित्यर्थः ॥ उत्तरार्धं[5] दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च (याज्ञवल्क्य २. १३८)—इति । मृतसंसृष्टिनो द्रव्यविभागकाले तत्पत्न्यामस्पष्टगर्भायां पश्चादुत्पन्नस्य पुत्रस्यांशं तस्मै संसृष्टः पितृव्यादिर्दद्यात् तदभावे[6] तु स्वयमेवांशं हरेदित्यर्थः । अत्र पुत्रत्वमात्रं पित्र्यंशग्रहणाधिकारितावच्छेदकं न विभागोत्तरोत्पन्नत्वम् । अप्रयोजकत्वाद्गौरवाद्देशान्तरे विभागात्प्रागुत्पन्नेऽज्ञाते चांशानधिकारितापत्तेः । अतः पूर्वोत्पन्नायासंसृष्टिनेपि पुत्राय संसृष्ट्यपि पितृव्यादिस्तदंशं दद्यादेव ॥ असंसृष्टिसोदरसंसृष्टिभिन्नोदरयोर्विभज्य धनग्रहणमाह स एव (याज्ञवल्क्य २. १३९)

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् ।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः ॥ इति ।

अत्रान्योदर्यान्यमातृजादिपदैर्न सापत्न्यो[7] भ्रातैवोच्यते किं तु पितृव्यादि-

---

1 B, C, D, E, G, H, K, N omit सपुत्रं...प्रवृत्तेः.

2 C तत्र व्यवहार०.

3 C ०ङ्गाभावे तत्सपुत्रं; E न त्वनुषङ्गाभावे.

4 B सोदरस्येति संसृष्टीत्यनु०.

5 F omits उत्तरार्ध...हरेदित्यर्थः.

6 B, C, D, G, H, K तदसत्त्वे for तदभावे.

7 B, D, E, F सपत्नैव भ्रातोच्यते; C न सपत्नो भ्रातैवोच्यते; G, K सपत्न्यो भ्रातैवोच्यते.

रपि । योगाविशेषात् । अन्यथा पितृव्यादिभिः संसर्गप्रतिपादनस्यानर्थक्यापत्तिः संसृष्टिताप्रयुक्तकार्यान्तराभावात् । असंसृष्टपीति देहलीदीपवत्पूर्वोत्तर[1]पदाभ्यामन्वेति । संसृष्टपदं चा[2]वृत्त्या द्रव्यसंसर्गवत उदरसंसर्गवतश्च सोदरस्य बोधकम् । आद्येर्थे अपिशब्दोपि तदनन्तरं बोध्यः । श्लोकान्ते एवकारोध्याहार्यः । तदेते वाक्यार्थाः । अन्योदर्यो भिन्नोदरः पत्नीपितृपितामहसा[3]पत्नभ्रातृपितृव्यादिः संसृष्टी चेद्धनं हरेत् । असंसृष्टप्यन्योदर्यो नेति । तेनान्योदरस्यान्वयव्यतिरेकाभ्यां संसर्गो धनग्रहणे कारणमुक्तम् । असंसृष्टपि संसृष्टाख्य[4]सोदरो गृह्णीयात् । अनेन सोदरत्वमात्रमेव कारण[5]मुक्तम् । संसृष्टो द्रव्यसंसर्गवानन्यमातृज एव केवलं न गृह्णीयादिति । तेनैकः संसृष्टत्वेन परः सोदरत्वेनेति द्वावपि विभज्य गृह्णीयातामिति निर्ग[6]र्वः ।। [7]एतमेवार्थं संसृष्ट्यधिकारे स्पष्टयति मनुः ( ९. २११–२१२ )

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ।।
सोदर्या विभजे[8]युस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ।। इति ।

हीयेताश्रमान्तरग[9]तिपातित्यादिना । सोदर्या भ्रातर इत्यन्वयः । ये च

---

1 G, K ०पादाभ्यां for पदाभ्याम्.

2 H omits ०वृत्त्या द्रव्य...भिन्नोदरः.

3 B, C, D, E, F, G, K सपत्नभ्रातृ.

4 A, C, K संसृष्टाख्यः सोदरः.

5 G, H, K कारणत्वमुक्तम्.

6 F निर्गर्वः.

7 C, G, H, K add before एतमेवार्थं the words असंसृष्टिसोदरपुत्रे संसृष्टयसोदरपुत्रे चायमेव पन्थाः. G, K एवमेवार्थम्.

8 A, M विभजेयुस्ते.

9 A, M ०गतपातित्या०; F आश्रमोत्तर०.

संसृष्टाः पत्नीपितृपितामहसापत्न[1]भ्रातृपितृव्यादयः । अत्र विशेषमाह प्रजापतिः

अन्तर्धनं तु यद्द्रव्यं[2] संसृष्टानां तु तद्भवेत् ।
भूमिं गृहं त्वसंसृष्टाः प्रगृह्णीयुर्यथांशतः ॥

अन्तर्धनं भूमिनिक्षेपा[3]दिना गोपितुं शक्यं सुवर्ण[4]रूप्यादि । संसृष्टो भिन्नोदरो गृह्णीयात् । भुवं तु[5] सोदरभ्रातरः । गवाश्वादि तु सोदरासोदरभ्रातर इत्यर्थः । भिन्नोदरः संसृष्टयेव गवाश्वाद्यपीति मदनः । तत्त्वेतद्वचनानारूढम् । अन्तर्धनभूमिगवाद्य[6]न्यतरमात्रसत्त्वे त्वसंसृष्टोपि सोदर एवेति स्मृतिचन्द्रिकायाम् । तत्र मानं चिन्त्यम् । सोदरेष्वपि केचित्संसृष्टिनः परे तु न तत्रापि संसृष्टिन एव गृह्णीयुः । सोदरत्वसंसृष्टित्वकारणद्वयसद्भावात् । अत एव गौतमः ( गौ. ध. सू. २८. २६ ) संसृष्टिनि प्रेते संसृष्टो रिक्थभाक्—इति ॥ बृहस्पतिः ।

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनौ ॥ इति ।

अत्रायं निर्गलितोर्थः । पुत्रः पित्रा संसृष्टोसंसृष्टो वा कृत्स्नं पित्र्यमंशं गृह्णीयात् । पुत्रत्वस्यैवांशग्रहणाधिकारितावच्छेदकत्वात् । पुत्रेष्वप्येकः संसृष्टः परो न चेत्संसृष्ट एव । संसृष्टिनस्तु संसृष्टी (याज्ञवल्क्य २. १३८)–इत्युक्तेः । संसृष्टपुत्रापुत्रसमवाये पुत्र एव । दद्याच्चापहरेच्चांशम्–इत्यत्र व्याख्यातत्वात् । पुत्रभिन्नसंसृष्टपितृ[7]भ्रातृपितृव्यादीनां समवाये

---

1 B, C, D, E, F, G, K सपत्न०.
2 C, G, H, K यत्किञ्चित् for यद्द्रव्यम्.
3 B, C, D, E, F, G, K भूनिक्षेपा०.
4 F सुवर्ण रूप्यादि.
5 B, D, E भुवं तु सोदरभ्रातृभगिन्यौ विभज्य । गवाश्वादि तु सोदरासोदरभ्रातरो भगिन्यश्चेत्यर्थः; C भुवं तु सोदरः गवाश्वादि तु सोदर इत्यर्थः; F सोदरभ्रातरो भगिन्यश्चेत्यर्थः; G भुवं तु सोदरासोदरभ्रातरः; M सोदरोऽसोदरः; A, C, K, M गृहाश्वाद्यपि for गवाश्वाद्यपि.
6 B, D, E omit अन्तर्धनभूमिगवादि before अन्यतर.
7 C पितृभ्रातृव्यादीनां; F संसृष्टपितृव्यादीनाम्.

पि[1]तरावेव । तत्राप्यादौ माता ततः पितेति मदनः । भ्रातृपितृव्याद्यस्तु विभज्यैव गृह्णीयुः । सर्वेषु संसृष्टत्वरूपग्रहणाधिकारितावच्छेदकसद्भावात् । [2]असंसृष्टभ्रातुः संसृष्टपितृव्यसापत्नभ्रात्रादीनां च समवायेपि विभज्यैव ।

[3]असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमा[4]तृजः ॥
संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।

( याज्ञवल्क्य २. १३९—१३८ )—इत्युक्तेः । केवलायाः पत्न्या एव संसृष्टत्वे सैव गृह्णीयात् । संसृष्टिनस्तु संसृष्टीत्यु[5]क्तेः । संसृष्टयापि तया सहान्येषां संसृष्टिनां समवाये त एव न सा । तथा च संसृष्टिप्रक्रमे शङ्खनारदौ ( नारद १६. २५–२७ )

भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा ।
विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदा[6]च्छिन्द्युरितरासु तु ॥
या तस्य दुहिता तस्याः पित्र्यं[7]शाद्भरणं मतम् ।
आसंस्काराद्धरेद्भागं परतो बिभृयात्पतिः ॥

अत्र यथा—यस्य हविर्निरु[8]प्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेत् ( तै. सं. २. ५. ४. १–२ ) इत्यत्र—हविर[9]भि

1 B, D, E, F पितेति वक्ष्यते for पितेति मदनः.
2 B, D, E, F omit असंसृष्टभ्रातुः before संसृष्टपितृव्य०.
3 B, E, F after विभज्यैव omit असंसृष्ट्यपि चाद...संसृष्टी.
4 C, G, H, K, N नान्यमातृज इत्युक्तेः केवलायाः.
5 D, E, F संसृष्टीत्युक्तं for संसृष्टीत्युक्तेः.
6 E omits तु after इतरासु. A, G, K आच्छिद्युः. H इतरा (र?) मियात् for इतरासु तु.
7 नारद reads पित्र्योंशो भरणे मतः । आसंस्कारं भजेरंस्ताम्.
8 E, F निरुक्तं for निरुप्तम्.
9 A, B, C, D, E, F, G, M हविरभिन्न उदियात् for हविरभि उदियात्.

उदियात् (शतपथब्रा. ११. १. ४. १) इत्यनेनैव हविःप्रवृत्त्यवगमान्निर्वापाविवक्षा तथा प्रक्रमादेव[1] मरणप्रव्रज्याविभागादिषु संसृष्टिनां कर्तृत्वावगमाद्भ्रातॄणामित्यविवक्षितम् । यत्तु संसृष्टिप्रक्रमे[2] शङ्खः—स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामिद्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी—इति तद्येन पितृव्यभ्रातृपुत्रसापत्न[3]भ्रात्रा सह संसर्गस्तन्मरणोत्तरं संसृष्टिमरणे तदीयासंसृष्टिभ्रात्रादीनां क्रमनियमार्थमिति मदनः तत्राप्यादौ[4] माता ततः पितेत्यपि स एव । ज्येष्ठा संयता ॥ पत्न्यभावे भगिनी । तथा च बृहस्पतिः

या तस्य भगिनी सा तु ततोंशं लब्धुमर्हति ।
अनपत्यस्य धर्मोयमभार्यापितृकस्य च ॥

केचित्तु या तस्य दुहितेति पेठुः । दुहितृभगिन्योरभावेनन्तरः सपिण्डः ॥

अथ स्त्रीधनम् ॥ मनुः ( ९. १९४ )

अध्यग्न्यध्यावहनिकं[5] दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

षडिति न्यूनसंख्याव्यवच्छेदार्थम्[6] । तेन

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्[7] ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ इति (याज्ञवल्क्य २. १४३)

1 D, F प्रक्रमादिव.
2 D, E, F संसृष्टिक्रमे.
3 B, C, D, G, K सपत्नभ्रात्रा.
4 B यत्रादौ; E यत्राप्यादौ.
5 D, F, H ०ध्यावाहनिकं.
6 D, E, F विच्छेदार्थं for व्यवच्छेदार्थम्.
7 D, E, F उपावृतं for उपागतम्.

याज्ञवल्कीय[1]माद्यपदं संगच्छते । विष्णुश्चाधिकमाह–पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतमाधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकम् (विष्णुध. सू. १७. १८) –इति । अध्यग्न्यादीन्याह कात्यायनः

विवाहकाले यत्स्त्रीभ्यो दीयते त्वग्नि[2]संनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥
प्रीत्या दत्तं तु यत्किंचिच्छ्वश्र्वा वा श्वशुरेण वा ।
पादव[3]न्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥
विवाहात्परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया ।
अ[4]न्वाधेयं तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥
गृहोपस्करवाह्यानां दो[5]ह्याभरणकर्मणाम् ।
मूल्यं लब्धं तु यत्किंचिच्छुल्कं तत्परिकीर्तितम् ॥

गृहोपस्कराद्यलाभे तन्मूल्यं कन्यादानकाले कन्यायै दत्तं तच्छुल्कमित्यर्थः । आधिवेदनिकं विवृणोति याज्ञवल्क्यः ( २. १४८ )

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यासां दत्ते त्वर्धं प्रकल्पयेत् ॥

अर्धमिति यावताधिवेदनिकद्रव्यसमं भवति तावदित्यर्थः । देवलः

भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः ॥

---

1 B याज्ञवल्कीये आदिपदं; K आदिपदं for आद्यपदं; E, D, F याज्ञवल्कीयपदम्.

2 B, C, E, F, G, K ह्यग्नि॰ for त्वग्नि॰.

3 अपरार्के reads पादवन्दनिकं तत्तु लावण्यार्जितमुच्यते; so does वि. र.; E, F पादौवन्दनिकम्.

4 स्मृतिच॰, अपरार्के read भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तु तद्भृगुः ।.

5 D, F, H दौत्याभरण॰ (F दैत्या॰); अपरार्के, स्मृतिच॰ read दोह्याभरणकर्मिणाम् ; so does दायभाग.

प्रतिश्रुतं स्त्रियै । स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः

पितृमातृपति[1]भ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥

स्थावरातिरिक्तं[2] सहस्रद्वयपणावधि देयमिति मदनः । व्यासोपि

द्विसाहस्रः परो दायः स्त्रियै[3] देयो धनस्य च ॥

इदं च द्विसहस्रावधिकं दानं प्रतिवर्षम् । अनेकवर्षेष्वितोधिकमपि शक्तौ स्थावरमपि च देयमित्यपि स एव ॥ दायादवञ्चनेन दत्ते द्रव्ये धारणमात्रार्थं दत्ते च भूषणादौ स्त्रीस्वत्वं[4] नास्तीत्याह कात्यायनः

तत्र[5] सोपधि यद्दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राथ पत्या वा न[6] तत्स्त्रीधनमुच्यते ॥

शिल्पप्राप्ते पित्रादि[7]भिन्नसख्यादिप्राप्तेपि स्त्रीधनत्वं नास्तीत्याह स एव

प्राप्तं शिल्पैस्तु यत्किंचित्प्रीत्या चैव यदन्यतः ।
भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥

यत्तु

भार्या पुत्रश्च दासश्च निर्धनाः सर्व एव ते ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्[8] ॥

(मनु ८. ४१६=महाभारते उद्योग. ३३. ६४) इति

---

1 E, F, K पितृमातृपितृभ्रातृ॰.

2 F ॰तिरिक्तसहस्र॰.

3 अपरार्क, स्मृतिच॰, वीर॰ read स्त्रियै देयः.

4 B, E, F स्त्रीस्वं for स्त्रीस्वत्वं; A स्त्रीसत्त्वम्.

5 A तच्च सोपधि.

6 D, E, F omit न before तत्स्त्री॰.

7 C, D, E, F पित्रामित्रसखादिप्राप्ते; G, K पित्राभिन्न॰ for पित्रादिभिन्न॰. K ॰सखादिप्राप्ते.

8 C, E, F, G, K तद्धनं भवेदिति.

तदपि शिल्पाद्यर्जितधनपरम् । आधिवेदनिकादिधनस्यस्वातन्त्र्यपरमिति तु युक्तम् । अत एव मनुः ( ९. १९९ )

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात्[1] ।
स्वकादपि[2] च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥ इति ।

निर्हारो व्ययः ॥ कस्मिंश्चिद्धने स्वातन्त्र्यमाह कात्यायनः

ऊढया[3] कन्यया सार्धं पत्युः पितृगृहेऽथवा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

भर्तृदत्ते स्थावरे तु न स्वातन्त्र्यम्[4]

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥ इति

नारदोक्तेः । भर्त्रादीनां स्त्रीधने स्वातन्त्र्याभावमाह स एव

न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि त्वेकतरो [5]ह्येषां स्त्रीधनं भक्षयेद्बलात् ।
सवृद्धिकं स दाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥

1 D, F, H, K बहुमध्यकात्.

2 F स्वकादपि वा वित्ता०.

3 अपरार्क reads ऊढायाः कन्यकाया वा; स्मृतिच० reads ऊढया कन्यया वापि.

4 D, E ०स्थावरे तु न स्वातन्त्र्यं भवेत्सदा.

5 B, C, M ह्येषां for ह्येषाम्.

तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूलमेव स दाप्यः स्याद्यदा स धनवान् भवेत् ॥

मनुः ( ८. २९; ९. २०० )

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥
पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥ इति ।

[1]धृतो भर्त्रादिना तस्यै दत्तः स तया धृत इत्यर्थः । देवलः

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात्[2]सवृद्धिकम् ।
पुत्रार्तिहरणे वापि स्त्रीधनं भोक्तुमर्हति ॥

वृत्तिर्जीवनार्थं पित्रादिदत्तं धनम् । लाभो वृद्धिः । मोक्षस्त्यागो दानमिति यावत् । पुत्रपदं कुटुम्बोपलक्षकम् । याज्ञवल्क्यः (२. १४७)

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हति ॥

अत्र भर्तृग्रहणात्तद्भिन्नेन दुर्भिक्षा[3]द्यापद्यपि स्त्रीधनं न ग्राह्यमित्युक्तम् । धर्मकार्यमावश्यकम् । संप्रतिरोधके बन्धने । कश्चिदकामो दद्यादित्याह देवलः

अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि[4] च[5] पतिर्दाप्यश्च तद्बलात् ॥

---

1 F omits धृतो...देवलः.
2 D, E, F सुवृद्धिकम्.
3 E दुर्भिक्षापद्यपि.
4 दायभाग and वीर० read विसृष्टं for निसृष्टम्.
5 अपरार्क, दायभाग, स्मृति०, वीर० read चेत्प्रतिदाप्यः स तद्बलात् for च पतिर्दाप्यश्च तद्बलात्.

ग्रासाच्छादनवासानामाच्छेदो[1] यत्र योषितः[2] ।
तत्र स्वमाददीत स्त्री विभागं[3] रिक्थिनस्तदा ॥

रिक्थिनः सकाशादित्यर्थः । इदं च साध्वीपरम् । दुष्टा तु न विभागमर्हति । तथा च स एव

अपकारक्रियायुक्ता निर्मर्यादार्थनाशिका[4] ।
व्यभिचाररता या च स्त्रीधनं न च सार्हति ॥

स एव

यज्ञार्थं द्रव्यमुत्पन्नं तस्माद्द्रव्यं नियोजयेत् ।
स्थानेषु धर्मयुक्तेषु[5] न स्त्रीमूर्खविधर्मिषु ॥

स्त्रीमरणोत्तरमन्वाधेयाख्यतद्धनग्रहणेधिकारिव्यवस्थामाह मनुः ( ९. १९५ )

अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः[6] प्रजायास्तद्धनं भवेत् ॥

प्रजां विशिनष्टि स एव ( ९. १९२ )

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन् मातृकं[7] रिक्थं भगिन्यश्च सनाभयः ॥

यत्र दुहित्राद्यभावेन पुत्राणामेव साहित्येनाधिकारः प्राप्तस्तत्र तत्सा-

---

1 दायभाग, स्मृतिच० and वीर० read उच्छेदः for आच्छेदः.

2 B योषिताम् for योषितः.

3 दायभाग, अपरार्क, वीर० read विभागं रिक्थिनां तथा.

4 अपरार्क, स्मृतिच० read निर्लज्जा चार्थनाशिका; वि. र. reads निर्लज्जार्थविनाशिका.

5 अपरार्क reads धर्मनिष्ठेषु for धर्मयुक्तेषु.

6 E दत्तायाः for वृत्तायाः.

7 E, F भ्रातृकं रिक्थं; H पैतृकं रिक्थम्.

हित्यम् । यत्र[1] तु कन्यानामेवाधिकारः प्राप्तस्तत्र तत्साहित्यमनूद्यते । न तु कन्यापुत्रयोः परस्परमप्राप्तं साहित्यं विधीयत इति मिताक्षरा-[2]शयः । परे त्वन्वाधेयभर्तृप्रीतिदत्तविषये कन्यापुत्रयोरपूर्वं[3] साहित्यं विधीयत इत्याहुः ॥

भगिनीषु विशेषमाह मनुः[4]

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् ॥

तदंशिनी पुत्रसमांशिनी । अप्रत्ताविवाहिता । तस्याः सत्त्वे ऊढा मानमात्रं किंचिन्मात्रं लभत इत्यर्थः । अप्रत्ताभावे सधवानां भ्रातृ-समोंशः । भगिन्यो बान्धवैः सार्धं विभजेरन् सभर्तृकाः—इति कात्या-यनोक्तेः । दौहित्रीभ्योपि किंचिद्देयम्

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकम् ॥ इति

मनूक्तेः ( ९. १९३ ) ॥ यौतकं त्वनूढानामेव न पुत्राणाम् । तथा च स एव ( मनु. ९. १३१ )

मातुस्तु यौतकं[5] यत्स्यात्कुमारीभाग एव सः ॥

यौतकं विवाहादिसमये पत्या सहैकासने[6] प्राप्तं युतयोर्यौतकमिति निघण्टूक्तेरिति मदनः ॥

---

1 E omits यत्र तु...साहित्यम्.

2 H मिताक्षरादयः.

3 D, E, F ०पुत्रयोरपरस्परमप्राप्तं सर्वसाहित्यं विधीयते; B पुत्रयोः परस्परमप्राप्तं साहित्यम्.

4 A मनुः टीकायां स्त्रीधनम्. दायभाग reads न लभेन्मातृकं धनम् for तु लभते मानमात्रकम्; परा. मा. reads लभते सा न मातृकम्; हरदत्त reads लभते तु समातृकम्.

5 E, F यौतकं किञ्चिद्विवाहादि०.

6 B, D, E, F एकासनप्राप्तम्.

अन्वाधेयभर्तृप्रीतिदत्तभिन्ने पूर्वोक्ते[1] पारिभाषिके स्त्रीधने तु विशेषमाह गौतमः ( गौ. ध. सू. २८. २२ )—स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च—इति । अप्रतिष्ठिता निर्धनाः । ब्राह्मणी कन्या तु सपत्नी[2]मातुरपि धनं गृह्णीयादित्याह[3] मनुः ( ९. १९८ )

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन ॥
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥

वाकारश्चार्थे तेन विभज्येति लभ्यते ॥ ब्राह्मणीपदं समोत्तमजातिकन्योपलक्षमिति केचित् । मानं तु तत्र[4] चिन्त्यम् ॥

दुहितॄणामभावे दुहितृसंततिः ॥ मातुर्दुहितरोभावे दुहितॄणां तदन्वयः—इति नारदोक्तेः (१६. २) । भिन्नमातृकाणां दुहितॄणां दौहित्राणां[5] च अनेकपितृकाणां तु पितृतो भागकल्पना (याज्ञवल्क्य २. १२०)—इति न्यायेनांशकल्पना ॥ यत्तु याज्ञवल्क्यः ( २. ११७ )—मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेन्वयः—इति तत्राप्यन्वयपदं कन्यासंततिपरमिति केचित् । परे तु दुहित्रभावे[6] पुत्रा एव गृह्णीयुः नारदीये[7] तदा मातुरेव परामर्शादित्याहुः । आचारसंवादी चायं पक्षः ॥ शेषमृणादिति ऋणसमं तन्न्यूनं वा पुत्रा एव गृह्णीयुरिति सांप्रदायिकाः ॥

दुहित्रादीनामभावे पुत्रपौत्राद्या गृह्णीयुः । दुहितॄणामभावे तु

---

1 B पूर्वोक्तपारिभाषिकस्त्रीधने; D, E, F ०भिन्नपूर्वोक्तपारिभाषिके स्त्रीधने.

2 B, C, G, K सपत्नमातुः. D, E, F omit ०पत्नीमातुः...त्कन्या तद० (l. 6).

3 C, G, K इति मनुः.

4 G, K तत्रापि चिन्त्यम्.

5 C omits दौहित्राणां before चानेकपितृकाणां; N reads दौहित्राणां चानेकपितृतो भाग०.

6 E दुहित्रभावे तु.

7 C, H, K omit नारदीये...गृह्णीयुः (l. 16).

रिक्थं[1] पुत्रेषु तद्धनम्—इति कात्यायनोक्तेः । अयं[2] दुहित्रादीनां मातृधनाधिकारोऽध्यग्न्यध्यावाहनिकमित्यादिपूर्वोक्तपारिभाषिकस्त्रीधन एव । मातृस्वामिकधनमात्रपरत्वे परिभाषावैयर्थ्यम् । तेन—स्त्रीधनं स्यादपत्यानाम्, स्त्रीधनं दुहितॄणाम् (गौ. ध. सू. २८. २२) इत्यादीनि पूर्वोक्तानि स्त्रीधनपदवन्ति बृहस्पतिगौतमादिवचनानि पारिभाषिकपराण्येव । यानि तु स्त्रीधनपदाभावेऽप्येकार्थकानि—भजेरन्मातृकं[3] रिक्थम् (मनु ९. १९२)—इत्यादीनि तान्यप्येतत्पराण्येव । एकमूलकल्पनालाघवात् ॥ यत्तु—विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं समम्—इति याज्ञवल्क्योक्तं (२. ११७) तत्पारिभाषिकातिरिक्त[4]विभागकर्तनादिलब्धपरम् । तेन पारिभाषिकातिरिक्तं मातृधनं दुहितृसत्त्वे[5] पुत्रादय एव लभेरन् । उभयविधसंतत्यभावे तु पारिभाषिकस्त्रीधनं प्रकृत्य विशेषमाह[6] याज्ञवल्क्यः (२. १४४)

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः ॥

विवाह[7]भेदेन बान्धवव्यवस्थामाह स एव (याज्ञवल्क्य २. १४५)

अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥

1 The दायभाग reads रिक्थं पुत्रे तु तद्भवेत् for रिक्थं पुत्रेषु तद्धनम्. The स्मृतिच० reads रिक्थं पुत्रेषु तद्भवेत्.

2 G अयं च दुहित्रादीनां; K अथ दुहित्रादीनाम्.

3 E, F omit मातृकं रिक्थ...विभजेरन्; K reads स्त्रीधनं यदाभावेऽप्येकार्थकं विभजेरन् मातृकम्.

4 D, E, F ०रिक्तविभागे कर्तनादि लब्धं परम्.

5 G दुहितृसत्त्वे च पुत्रादयः.

6 F reads विशेषमाह स एव (omitting the intervening words).

7 C विवाहभावेन.

भर्तुर[1]भावे तत्कुले तस्याः प्रत्यासन्नो लभते पित्र[2]भावे च पितृकुले तस्याः प्रत्यासन्नः । अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् इति मनुना ( ९. १८७ ) मृतनिरूपिताया एव प्रत्यासत्तेर्धनाधिकारितावच्छेदकत्वेनाभिधानात् ॥ यत्तु मिताक्षरायां भर्त्रभावे तत्प्रत्यासन्नानां सपिण्डानां पित्रभावे च तत्प्रत्यासन्नानां सपिण्डानामिति तत्रा[3]पि तेनास्याः प्रत्यासन्नास्तत्प्रत्यासन्नास्तद्द्वारा तत्कुले प्रत्यासन्ना इति यावदि[4]त्येवं व्याख्येयम् । ब्राह्मादिषु चतु[5]र्ष्वपीति विप्र[6]परम् । तेषामेव तं प्रति धर्म्यत्वात् । यस्य तु क्षत्रियादेर्गान्धर्वोपि धर्म्यस्तस्य तदूढाधनमपि भर्तुरेव । तथा च मनुः ( ९. १९६–१९७ )

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अतीतायामप्रजसि भर्तुरेव तदिष्यते ॥
य[7]त्त्वस्यै स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
अतीतायामप्रजसि मातापित्रोस्तदिष्यते ॥

ब्राह्मादिविवाहेषु भर्तुरभाव आसुरादिषु च पित्रोरभावे पारिभाषिकस्त्रीधनेधिकारिण आह बृहस्पतिः

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥
यदासामौरसो न स्यात्सुतो दौहित्र एव वा ।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः ॥

---

1 E भर्तुरलाभे.

2 H विभिन्नभावे च पितृकुले.

3 E तत्रापि ते तस्याः प्रत्यासन्नाः.

4 D, G, K इत्येव for इत्येवम्.

5 D, E, F omit चतुर्ष्वपीति...धनमपि.

6 K reads विधिरयं for विप्रपरम्.

7 F यथास्यै for यत्त्वस्यै.

8 मनु°, दायभाग, वीर° read अप्रजायामतीतायां in both verses and यत्त्वस्याः for यत्त्वस्यै.

दुहितृदौहित्र्योरप्यभावोत्र बोध्यः । तदभाव एवौरसदौहित्रयोरधिकारात् । आसुरादिविवाहेषु बन्धुदत्तेषु कात्यायनः

बन्धुदत्तं तु ब[1]न्धूनामभावे पुत्रगामि तत् ॥

शुल्कविषये तु गौतमः (गौ. ध. सू. २८. २३)—भगिनीशुल्कं सोदर्याणा[2]मूर्ध्वं मातुः—इति । यत्तु शङ्खः—शु[3]ल्कं च स्वयं वोढा—इति तद्विवाहात्प्राङ्मृतायां बोध्यम् । अत्र वि[4]शेषमाह याज्ञवल्क्यः (२. १४६)

मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् ॥

पू[5]र्वं दत्तं शुल्कं मृतायां कन्यायां स्वस्य तस्याः पितुश्च व्ययादवशिष्टं भर्ता गृह्णीयादित्यर्थः । क्वचिद्विशेषमाह बौधायनः

रिक्थं मृतायाः[6] कन्याया गृह्णीयुः सोद[7]राः समम् ।
तदभावे तु तन्मातुस्तदभावे पितुर्भवेत् ॥ इति ।

इ[8]दं विवाहात्प्राङ् मृतायां वाग्दानकालीनमातामहादिदत्तालंकारादिविषयमिति सांप्रदायिकाः ॥

अथानंशाः ॥ याज्ञवल्क्यः ( २. १४० )

क्लीबोऽ[9]थ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोचिकित्स्यरो[10]गश्च भर्तव्याः स्युर्निरंशकाः ॥

---

1 दायभाग, वीर० and स्मृतिच० read बन्धूनामभावे भर्तृगामि तत् for ०भावे पुत्रगामि तत्.

2 C पूर्वं मातुः; D, E, F ०णा (?)मूर्ध्नि मातुः.

3 स्मृतिच० reads स्वं स्त्रीशुल्कं वोढा; वि. र. reads स्वं शुल्कं वोढा; सरस्वती० 'स्वं च शुल्कं वोढा'.

4 D, E, F अत्र विशेषमाह कात्यायनः.

5 B, D, E, F पूर्वदत्तं; K एवं दत्तम्.

6 E मृतायां गृह्णीयुः.

7 वि. र. and वीर० read सोदराः स्वयम्; मद. पा. reads सोदराः सदा.

8 C, D, E, F, G, K इदं तु विवाहात्.

9 दायभाग, वि. र. read पतितस्तत्सुतः क्लीबः.

10 The मिता० reads ०रोगाद्याः for ०रोगश्च.

तज्जः पतितोत्पन्नः । विभागोत्तर[1]मौषधादिना पुंस्त्वादियुक्तास्त्वंशं लभन्त एव विभक्तोत्पन्नवत् । मनुः ( ९. २०१ )

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

निरिन्द्रियाः घ्राणादिरहिताः । नारदः ( १६. २१–२२ )

पितृद्विट् पतितः षण्ढो यश्च स्यादपर्या[2]न्त्रितः ।
औरसा अपि नैतेंशं लभेरन् क्षेत्रजाः कुतः ॥
दीर्घतीव्रामयग्रस्ता ये जडोन्मत्तपङ्गवः ।
भर्तव्याः स्युः कुलस्यैते तत्पुत्रास्त्वंशभागिनः ॥

अप[3]र्यान्त्रितः राजद्रोहाद्यपराधेन बन्धुभिर्घटस्फोटादिना बहिष्कृत इति मदनः । व्यवसायार्थं नावादि[4]ना समुद्रमध्ये द्वीपान्तरं गन्तेति तु युक्तम् । द्विजस्याब्धौ तु नौयातुः शोधितस्याप्य[5]संग्रहः–इति तस्य कलौ संसर्गनिषेधात् । राजद्रोहादौ घटस्फोटबहिष्कारयोरविधानाच्च । शङ्खलिखितौ–अपर्या[6]न्त्रिते रिक्थपिण्डोदकानि व्यावर्तन्ते–इति ॥ वसिष्ठः ( वसिष्ठध. सू. १७. ५२ ) अनंशास्त्वाश्रमान्तरगताः–इति । नैष्ठिकब्रह्मचारिवानप्रस्थयतय इत्यर्थः ॥

कात्यायनः

अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते ।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु कर्हि[7]चित् ॥

---

1 C omits विभागोत्तर...लभन्त एव.
2 G, H, K अपपात्रितः.
3 G, H, K अपपात्रितः.
4 B, C, D, E, F, G नावा समुद्र०.
5 B, C, D, E, F, G, K शोधितस्यापि संग्रहः.
6 G, H अपपात्रिते; K अपपात्रितो.
7 The दायभाग, अपरार्क, स्मृतिच०, परा. मा., वीर० read चार्हति for कर्हिचित्.

सगोत्रादिति सगोत्रेणोढायां तस्माज्जात इत्यर्थः । अक्रमोढासुतः क्षेत्रजकानीनादिरिति केचित् । ज्येष्ठायां कन्यायामपरिणीतायां कनिष्ठा कृतविवाहा चेत्तदा ते द्वे अपि अक्रमोढाशब्देनोच्येते इति तु युक्तम् । तस्य पितृसवर्णत्वेंऽशभाक्त्वमाह स एव

अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः ।
असवर्णा[1]प्रसूतश्च क्रमोढायां च यो भवेत् ॥

प्रतिलोमप्रसूतायां भर्त्राप्युत्पन्नः पुत्रो नांशभाक् । तथा च स एव

प्रतिलोमप्रसूतायास्तस्याः पुत्रो न रिक्थभाक् ।
ग्रासाच्छा[2]दनमत्यन्तं देयं तद्बन्धुभिर्मतम् ॥ इति ।

गुणवत्पुत्रान्तरसत्त्वे दुर्वृत्तस्यांशानर्हतामाह मनुः ( ९. २१४ )

सर्वे एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ॥ इति ।

बृहस्पतिः

सवर्णाजोप्यगुणवान्नार्हः स्यात्पैतृ[3]के धने ।
तत्पिण्डदाः श्रोत्रिया ये तेषां[4] तत्तु विधीयते ॥
उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः ।
अतस्तु विपरीतेन तेन नास्ति प्रयोजनम् ॥

एते चानंशा रिक्थग्राहिभिर्याव[5]ज्जीवं पोषणीयाः ।

सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिभिः ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥

---

1 F, G असवर्णाप्रसूतायां भर्त्राप्युत्पन्नः (omitting a few words).
2 दायभाग read ०च्छादनमात्रं तु देयं यद्बन्धुभिः कृतम्; वीर० 'मात्रं तु देयं तद्बन्धु०'.
3 D, E, F पितृकैर्धनैः for पैतृके धने.
4 दायभाग, वि. र., वीर० read तेषां तदाभिधीयते for तेषां तत्तु विधीयते.
5 D, E यावज्जीवपोषणीयाः.

इति मनूक्तेः ( ९. २०२ ) । अत्यन्तं यावज्जीवम् । भर्तव्यास्ते निरंशकाः—इति पूर्वोक्तयाज्ञवल्क्योक्तेश्च[1] ( २. १४० ) । आश्रमान्तरगतपतिततत्पुत्रास्तु न भर्तव्याः । तथा च वसिष्ठः ( वसिष्ठध. सू. १७. ५२–५४ ) अनंशास्त्वाश्रमान्तरगताः । क्लीबोन्मत्तपतिताश्च । भरणं क्लीबोन्मत्तानाम्—इति । अत्र द्वयोर्भरणे श्रवणमि[2]तरयोः परिसंख्यार्थम् ॥

देवलः

मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः ।
पतितस्तदपत्यं च लिङ्गी दायांशभागिनः ॥
तेषां पतितवर्ज्येभ्यो भक्तवस्त्रं[3] प्रदीयते ॥

लिङ्गी निषिद्धलिङ्गधारी ॥ बौधायनः ( बौ. ध. सू. २. २. ३८–४१ ) अतीतव्यवहारान्ग्रासाच्छादनैर्बिभृयुः । अन्धजडक्लीबव्यसनिव्याधितांश्चाकर्मिणः । पतिततज्जवर्जम् । इति ॥ संन्यासच्युततत्पुत्रावपि न भरणीयाविति मदनादयः ॥

अनंशपुत्रास्तु निर्दोषा भागं लभन्त एव । तेषामेवौरसाः पुत्रा भागहारिणो न तु पतितस्य पतनीये कर्मणि कृतेनन्तरोत्पन्नाः प्रतिलोमासु स्त्रीषू[4]त्पन्नाश्चाभागिनस्तत्पुत्राः पैतामहे[5]ऽप्यर्थे—इति विष्णूक्तेः ( विष्णुध. सू. १५. ३४–३८ ) । औरसाः क्षेत्रजास्तेषां निर्दोषा

1 B, C, D, E, F याज्ञवल्क्याच्च.

2 C omits श्रवणं after भरणे; G भरणश्रवणम्; K भरणश्रवणे तरयोः (इतरयोः ?). B, D, E omit ०नामिति । अत्र...न्मत्त० (l. 8); F reads भरणं क्लीबोन्मत्तजडान्धकाः ( omitting a line ).

3 K भक्तवस्त्रः for भक्तवस्त्रम्.

4 H स्त्रीषु तत्पुत्राश्चाभागिनोस्तत्पुत्राः.

5 E, F पैतामहमथै इति.

भागहारिणः—इति याज्ञवल्क्योक्तेश्च ( २. १४१ ) । तत्कन्यासु पत्नीषु च विशेषमाह[1] याज्ञवल्क्यः ( २. १४१–१४२ )

सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः[2] ॥
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥

व्यभिचारे[3] बहिर्निष्कासनमपोषणं च । प्रातिकूल्ये[4] बहिर्निष्कासनमेव । भरणं तु कार्यमेवेति मदनादयः ॥

## ॥ इति[5] दायविभागः ॥ ८ ॥

## ॥ अथ ऋणादानम् ॥

तत्र धनिकस्य प्रयोगप्रकारमाह बृहस्पतिः

परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

यावत्तावकमृणं न शोध्यते तावदेतद्गृहक्षेत्रादेर्दानविक्रयाधिकरणाद्यहं[6] न करिष्यामीति निर्बन्धो[7] बन्धः । लग्नकः प्रतिभूः । स एव

---

1 B, C, E, F, G, H, K विशेषमाह स एव.

2 E मातृसात्कृताः.

3 H omits व्यभिचारे बहि...लेख्यारूढं (l. 12).

4 B, D प्रातिकूल्येन.

5 B, D read इति श्रीमीमांसकभट्टशंकरात्मजभट्टनीलकण्ठेन कृते भगवद्भास्करे व्यवहारमयूखे दायभागनिरूपणं षष्ठम् । श्रीरघुनाथाय नमः ।; E, F have the same passage except the words श्रीरघु...नमः and read शंकरभट्टात्मज; C has the same except that it reads शंकरात्मजेन and omits षष्ठं...नमः. A has the verse चर्मण्वती...भगवन्तदेवः and then इति दायविभागः समाप्तः. G, K read मीमांसकभट्ट-शंकरात्मजनीलकण्ठेन कृते भास्करे &c. K reads व्यवहारभास्करे.

6 G °क्षेत्रादिदानविक्र°.

7 C निबन्धो बन्धः.

कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते ।
चतुर्गुणं चाष्टगुणं[1] कुसीदाख्यमतः स्मृतम्[2] ॥

कात्यायनः[3]

ऋणिकेन तु या वृद्धिरधिका संप्रकल्पिता ।
आपत्कालकृता नित्यं[4] दातव्या कारिता तु सा ॥
प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता ॥ इति ।

प्रतिकालं प्रतिदिनं प्रतिमासं[5] प्रतिवर्षं चेत्यर्थः ॥ याज्ञवल्क्यः (२. ३७)

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥

अन्यथा अबन्धके ॥ व्यासः

सबन्धे भाग आशीतः षाष्ठो[6] भागः सलग्नके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥

याज्ञवल्क्यः ( २. ३८ )

कान्तारगास्तु[7] दशकं सामुद्रा विंशकं शतम् ।

दद्युरित्युत्तरवाक्यस्थस्यानुषङ्गः[8] ।

दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ इति ।

---

1 F, K वाष्टगुणम्.
2 B, D, E, F स्मृतः.
3 E, F omit कात्यायनः.
4 B, D, E, F नित्ये for नित्यं; D, E, F दातव्यो for दातव्या.
5 D repeats प्रतिमासं and D, E, F, G, K read प्रतिवर्षं वेत्यर्थः.
6 E, F षष्ठो भागः; वि. र. reads साष्टभागः for षाष्ठो भागः.
7 B कान्तारकास्तु; D, E, F कारकास्तु.
8 C reads वाक्यानुषङ्गः; E वाक्यस्थानुषङ्गः.

विष्णुः ( विष्णुध. सू. ६. ४० )

योगृहीत्वा ऋणं सर्वं[1] श्वो दास्यामीति सामकम् ।
न दद्याल्लोभतः पश्चात्[2] तद्दिनाद्वृद्धिमाप्नुयात् ॥

याचिते वृद्धिमाह कात्यायनः

यो याचितकमादाय तमदत्त्वा दिशं[3] व्रजेत् ।
ऊर्ध्वं संवत्सरात्[4] तस्य तद्धनं वृद्धिमाप्नुयात् ॥
कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥
स्वदेशेवस्थितो यस्तु न दद्याद्याचितः क्वचित् ।
तं ततोकारितां वृद्धिमनिच्छन्तं च दापयेत् ॥

नारदः ( ४. १०८ )

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता[5] क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते[6] ॥

कात्यायनः

प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम् ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

---

1 B, F त्वादास्यामि. स्मृतिच॰ and वीर॰ read ऋणं पूर्वम्.

2 B, C, D, E, F, G, K पश्चादिनाद्वृद्धिमवाप्नुयात्. स्मृतिच॰ reads तदहर्वृद्धि॰.

3 C दिशे for दिशम्.

4 C ऊर्ध्वं मासत्रयात्तस्य.

5 B, D, E, F अनाकारि च कश्चित्.

6 B विवर्तेत.

पण्यं[1] गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रय[2]स्योपरिष्टात्तद्धनं वृद्धिमा[3]प्नुयात् ॥
निक्षिप्तं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

नारदः ( २. ३६ )

पण्य[4]मूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथा[5]दानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥

आक्षिकोक्षक्रीडासंबन्धी । अविवक्षिताः अपरिभाषिताः ।
याज्ञवल्क्यः ( २. ४४ )

दीयमानं न गृह्णाति प्रयुक्तं यत्स्व[6]कं धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्धते न ततः परम् ॥

बृहस्पतिः

हिरण्ये द्विगुणा वृद्धिस्त्रिगु[7]णा वस्त्रकुप्यके ।
धान्ये चतुर्गुणा प्रोक्ता शदवाह्यल[8]वेषु च ॥

शदः पुष्पमूलफ[9]लादिः । वाह्यो बलीव[10]र्दादिः । लवो मेषोर्णाचमरीके-

1 D omits पण्यं...पञ्चकं शतम्.
2 C ऋतुत्रयोपरिष्टात्.
3 C अवाप्नुयात् for आप्नुयात्.
4 E पण्यं मूल्यम्; K पण्यमूलम्.
5 B, D, F omit वृथादानाक्षिकपणा...ततः परम् (l. 11). C वृथादानार्थिक०.
6 याज्ञवल्क्य reads यः स्वकं धनम्.
7 D, E, F वस्त्ररकुथके; K ०गुणा वृद्धिकुप्यके.
8 F लवेषु वा.
9 G, K ०फलादि.
10 F, G बलीवर्दादि and ०केशादि. A चमरि for चमरी.

शादिः । यत्तु मनुः ( ८. १५१ )–धान्ये शदे[1] लवे वाह्ये नातिक्रामति पञ्चताम्– इति तत्षाड्गुण्यादिनिषेधपरम्[2] ॥ कात्यायनः

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च ।
तिष्ठति द्विगुणा[3] वृद्धिः फलकैटा[4]विकस्य तु ॥

कैटं कीट[5]प्रभवं पट्टदुकूलतसरीवस्त्रादि । वसिष्ठः

ताम्रायः कांस्य[6]रीतीनां त्रपुणः सीसकस्य च ।
त्रिगुणा तिष्ठतो वृद्धिः काला[7]च्चिरकृतस्य तु ॥

व्यासः

शाककार्पासबीजेषु षड्गुणा परिकीर्तिता ॥

कात्यायनः

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवण[8]स्य च ॥

विष्णुः ( विष्णुध. सू. ६. ११–१५ )–हिरण्यस्य द्विगुणा वृद्धिस्त्रि[9]गुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा संततिः स्त्रीपशूनाम्–इति । पुष्पमूल[10]फलानि च तुलाधृतमष्टगुणमिति ( वसिष्ठध. सू. २. ४६–४७ ) ॥ नारदः

---

1 D, E, F शदलववाह्ये; K शदलवे वाह्ये.
2 D, E, F षड्गुणादि०.
3 D, E, F द्विगुणं for द्विगुणा.
4 C फलककैटा०; K फलं कैटाविकस्य.
5 D, F कीटप्रभवपट्ट०; K कीटभवम्.
6 C, F कास्य; D, E, F त्रिगुणः सीसकस्य.
7 F फलाच्चिर०.
8 A, B, D, F, M लवणस्य तु.
9 H त्रिगुणा च चतुर्गुणा रसस्य. The printed विष्णुध. सू. reads परा वृद्धिर्द्विगुणा । धान्यस्य त्रिगुणा वस्त्रस्य चतुर्गुणा.
10 C पुष्पमूलानि च; D, F पुष्पमूलके फला०.

ऋणानां सार्वभौमोयं विधिर्वृद्धिकरः स्मृतः ।
देशाचारस्थितिस्त्वन्या यथर्णमेव[1]तिष्ठते ॥ (नारद ४. १०५)

सार्वभौमः सार्वत्रिकः । इदं च द्वैगुण्यादि सकृत्प्रयोग एव । कालान्तरेण पुरुषान्तरेण तत्रैव रेकै[2]सेकादिना वा प्रयोगान्तरे तु परमवृद्धे[3]रप्यधिका भवति । तथा च मनुः ( ८. १५१ )

कुसीदवृद्धिर्द्वैगुण्यं[4] नात्येति सकृदाहिता ॥

एकप्रयोगमध्येन्तरान्तरा गृह्यमाणेपि परमवृद्धेरप्याधिक्यमिति सांप्रदायिका विज्ञानेश्वरादयः ॥

अथाधिविधिः ॥ बृहस्पतिः

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥

नारदः ( ४. १२४ )

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः[5] ।
कृत[6]कालोपनेयश्च यावद्देयोद्यतस्तथा ॥

हारीतः

बन्धं यथा स्थापितः स्यात्तथैव परिपालयेत् ।
अन्यथा नश्यते[7] लाभो मूलं नश्येद्व्यतिक्रमात् ॥

1 G यदर्णमव.
2 F रेकें सेकादिना; K रेतःसेकादिना.
3 B, D, E, F वृद्धेरप्यधिका ( क? ) मिति; C, G ०वृद्धेराधिक्य०.
4 K द्वैगुण्यान्नात्येति.
5 E विलक्षणः for द्विलक्षणः.
6 B कृतः कालोप०; D, E, F कृतकालोपमेयश्च. अपरार्क reads कृतकालापनेयश्च and मिता० reads कृतकालेपनेयश्च.
7 B, D, E, F लाभो यावद्देयोद्यतस्तथा.

व्यतिक्रमः आधिनाशः ॥ याज्ञवल्क्यः ( २. ५९ )

गोप्याधिभोगे नो वृद्धिः सोपकारेथ ह्रापिते । इति ।

ह्रापिते उपकाराक्षमतां नीते इत्यर्थः ॥ कात्यायनः

अकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा न लभेत सः ॥

कर्म कारयेदुपयुञ्जीत । कर्मफलं भाटकम् । याज्ञवल्क्यः ( २.५९ )

नष्टो देयो विनष्टश्चेद्दैवराजकृतादृते ॥

नष्टो विकृतिं गतः पूर्ववत् कृत्वा देयः । बृहस्पतिः

भुक्ते त्व[1]सारतां प्राप्ते मूलहानिः प्रजायते ॥

आधेर्विनाशे तन्मूल्यं दातव्यमित्याह व्यासः

ग्रहीतृदोषान्नष्ट[2]श्चेद्बन्धो हेमादिको भवेत् ।
ऋणं स[3]लाभं संशोध्य तन्मूल्यं दापयेद्धनी ॥

नारदः ( ४. १२६ )

विनष्टे मूलनाशः स्याद्देवराजकृतादृते ॥

मनुः ( ८. १४४ )

मूल्येन तोषयेच्चैनमाधिस्तेनोन्यथा भवेत् ॥

बृहस्पतिः

दै[4]वराजोपघातेन यत्राधिर्नाशमाप्नुयात् ।
त[5]त्राधिं दापयेद्दद्यात्सोदयं वा धनमृणी ॥

---

1 F भुक्ते तु सारतां.
2 K दोषाकृष्टश्चेद्बन्धा हेमाद्रिको; C बन्धो होमाधिको.
3 E ऋणं सलाभे.
4 E, F देवराजोप०.
5 The वीर० reads तत्रान्यद् दापयेद्बन्धं शोधयेद्वा धनमृणी for तत्राधिं... धनमृणी.

व्यासः

दैवराजोपघाते तु न दोषो धनिनः क्वचित्[1] ॥ इति ।

कात्यायनः

न चेद्धनिकदोषेण निपतेद्वा म्रियेत वा ।
आधिमन्यं स दाप्यः स्यादृणान्मुच्येत[2] नर्णिकः ॥

याज्ञवल्क्योपि ( २. ६० )

आधेः स्वीकरणात्सिद्धी[3] रक्ष्यमाणोप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥

नारदः ( ४. १३९ )

आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥

वसिष्ठोपि

तुल्यकाले निसृष्टानां[4] लेख्यानामाधिकर्मणि ।
येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरः ॥

स एव

यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ[5] ।
विभज्याधिः समस्तत्र[6] भोक्तव्य इति निश्चयः ॥

1 A, M omit इति after क्वचित्.
2 F ऋणान्मुच्यते.
3 D, E, F, G, K सिद्धो रक्ष्य०.
4 C ०काले विसृष्टानां; E ०कर्मभिः for ०कर्मणि.
5 C उपस्थितौ for उपागतौ.
6 स्मृतिच० and वीर० read समं तेन for समस्तत्र.

कात्यायनः

आधिमेकं द्वयोर्यस्तु कुर्या[1]त्तं प्रति यद्भवेत् ।
तयोः पूर्वकृतं ग्राह्यं तत्कर्ता [2]चौरदण्डभाक् ॥

याज्ञवल्क्यः ( २. ५८ )

आधिः प्रणश्येद्द्विगुणे धने यदि न मोच्यते ।
काले कालकृतो नश्येत्फलभो[3]ग्यो न नश्यति ॥

बृहस्पतिः

हिरण्ये द्विगुणीभूते [4]पूर्णे काले [5]धृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य तु ॥

व्यासः

गोप्याधिर्द्विगुणादूर्ध्वं कृतकालः कृतावधेः ।
आवेदयित्वर्णिकुले भोक्तव्यस्तदनन्तरम् ॥

बृहस्पतिः

हिरण्ये द्विगुणीभूते मृते नष्टेधमर्णिके ।
द्र[6]व्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥

याज्ञवल्क्यः ( २. ६१ )

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥

1 स्मृतिच०, वि. र. (p. 35) and वीर० (p. 312) read कुर्यात्का प्रतिपद्भवेत् for कुर्यात्तं प्रति यद्भवेत्; परा. मा. reads कृत्वा यथेका प्रतिपद् भवेत्.
2 B, C, D, E F, K चोरदण्डभाक्; D, E, F पूर्वकृते for पूर्वकृतम्.
3 G, K N, फलभोगो for फलभोग्यो.
4 B, C, D, E पूर्णकाले for पूर्णे काले.
5 वि. र., अपरार्क and वीर० read कृतेवधौ; मिता० and परा. मा. 'कृतावधेः'.
6 C द्रव्ये तदीयं.

धनिकविश्वासेनाल्पद्रव्यार्थमतिबहुमूल्यः स्थापितश्चेद्दणिकविश्वासेन वात्यल्पमूल्योपि[1] बहुद्रव्यार्थं स्थापितश्चेच्चरित्रबन्धकम्[2] । अथवा चरित्रं गङ्गास्नानादिपुण्यमाधीकृतं चरित्रबन्धकम् । एतदुभयविधमपि चरित्रबन्धकं द्विगुणीभूतेपि द्रव्ये न नश्यति । द्विगुणीभूतमपि द्रव्यमेव देयं नाधिनाश इति । सत्यंकारकृतं तदपि द्विगुणीभूते द्रव्ये न नश्यतीत्यर्थः ॥ स एव ( याज्ञवल्क्य २.६२–६३ )

उपस्थितस्य मोक्तव्य आधिः[3] स्तेनोन्यथा भवेत् ।
प्रयोजके सति धनं कुलेन्यस्याधिमाप्नुयात् ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ॥

उत्तमर्णेसंनिहिते[4] तस्य कुलेन्यस्य हस्ते सवृद्धिकं धनं दत्त्वाधिर्ग्राह्यः । आधिविक्रयेण तु[5] धनदित्सायां तत्कालं मूल्यं कृत्वा वृद्धिरहितः स्थाप्य इत्यर्थः । बृहस्पतिः

क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः ।
मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयाद्दणी ॥

याज्ञवल्क्यः ( २. ६४ )

यदा तु द्विगुणीभूतमृणमाधौ[6] तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥

अथ प्रतिभूः ॥ तत्रैविध्यमाह याज्ञवल्क्यः ( २. ५३ )

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ॥

1 E अत्यल्पमूल्यो बहु०.
2 C, H स्थापितश्चेत्तचरित्र०.
3 H, K आधिस्तेनो; G, K मोक्तव्य for मोक्तव्य.
4 K, N omit उत्तमर्णेसन्निहिते...स्थाप्य इत्यर्थः.
5 C ०विक्रयेण तु दित्सायां.
6 D, E, F ऋणमादौ for ऋणमाधौ.

प्रत्ययः समीचीनोयमित्युक्त्वा[1] विश्वासोत्पादनम् ॥ बृहस्पतिस्तु चातुर्विध्यमाह

आहैको दर्शयामीति साधुरित्यपरोब्रवीत् ।
दाताहमेतद्द्रविणमर्पयामीति चापरः ॥

अर्पयामि दापयिष्यामीत्यर्थः । कात्यायनः

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम् ।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥

[2]पक्षत्रयमित्युपलक्षणम् । यावान्कालोपेक्षितस्तावन्तं दद्यादित्यर्थः ॥ कात्यायनः

दर्शनप्रतिभूर्यस्तं देशे काले न दर्शयेत् ।
[3]निबन्धमावहेत्तत्र दैवराजकृतादृते ॥

निबन्धमावहेद्धनिकद्रव्यं दद्यात् । बृहस्पतिः

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसंवादे तौ विना[4] तत्सुतौ तथा ॥

कात्यायनः

प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत्क्वचित् ।
पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम् ॥

[5]व्यासोपि

---

1 C, K इत्युक्त्या for इत्युक्त्वा.
2 N omits पक्षत्रयमित्युप...दद्यादित्यर्थः.
3 G निर्बन्ध० for निबन्ध०.
4 E, F तौ विना जन्मनौ तथा.
5 G, K व्यासः ऋणं.

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः ।
[1]समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥

[2]पैतामहमृणं पौत्रो मूलमात्रं दद्यात्प्रातिभाव्यागतं सुतोपि मूलमात्रं दद्यात् । इदं तु द्रव्यमगृहीत्वा प्रातिभाव्याङ्गीकारे । द्रव्यग्रहणे[3] प्रातिभाव्याङ्गीकारे तु पुत्रपौत्राभ्यामपि सवृद्धिकं देयम् । तथा च कात्यायनः

गृहीत्वा बन्धकं यत्र दर्शनेस्य[4] स्थितो भवेत् ।
विना पितृ[5]धनात्तस्माद्दाप्यः स्यात्तदृणं सुतः ॥

याज्ञवल्क्यः ( २. ५५ )

बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एक[6]च्छायाश्रितेष्वेषु धनिक[7]स्य यथारुचि ॥

अहमेव सर्वं दास्यामीति प्रत्येकं प्रतिज्ञा एकच्छाया[8] तामाश्रितेष्वापन्नेषु धनिकेच्छया यः कश्चिद्दद्यात् । अंशैर्दास्या[9]मीति प्रतिज्ञायां तु तथा देयमित्यर्थः । का[10]त्यायनः

---

1 F omits समं दद्यात्...सुतौ (l. 3).
2 K, N omit पैतामहमृणं...ङ्गीकारे.
3 G, K ॰ग्रहणेन for ॰ग्रहणे; D adds प्रातिभाव्यग्रहणे after द्रव्यग्रहणे.
4 B, D, E, F दर्शनस्य स्थितौ (E ॰तो).
5 C, D, E, F, K पित्र्यधनात् for पितृधनात्. The मिता॰ and वीर॰ read विना पित्रा धनात् for विना पितृधनात्.
6 K reads एकेच्छयाश्रितेषु.
7 C omits धनिकस्य...पन्नेषु.
8 D, F ॰च्छायानाश्रितेष्वापन्नेषु.
9 B, C, D, E, F, G दास्यामः for दास्यामि.
10 K, N omit कात्यायनः । एक...नुसारेण.

एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तत्सुतः सर्वं[1] पित्रंशात्तु मृते सुतः ॥

पित्रंशात्पित्रंशानुसारेण । याज्ञवल्क्योपि[2] ( २. ५६ )

प्रतिभूर्दापितो यत्तु[3] प्रकाशं धनिनां[4] धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥

बृहस्पतिः

प्रातिभाव्यं तु[5] यो दद्यात्पीडितः प्रतिभावितः ।
त्रिपक्षात्परतः सोर्थं द्विगुणं लब्धुमर्हति ॥

अथोत्तमर्णस्यर्णग्रहणप्रकारः ॥ बृहस्पतिः

प्रतिपन्नमृणं दाप्यः सामादिभिरुपक्रमैः ।
धर्मोपधि[6]बलात्कारैर्गृहसंरोधनेन च ॥

प्रतिपन्नमधमर्णेनाङ्गीकृतम् । उपक्रमैरुपायैः । तान्विवृणोति स एव

सुहृत्सुबन्धु[7]संदिष्टैः सामोक्त्यानुगमेन च ।
प्रायेण[8] वा ऋणी दाप्यो धर्म एष उदाहृतः ॥
छद्मना याचितं चार्थमानीय ऋणिकाद्धनी[9] ।
अन्वाहितादि संगृह्य दाप्यते यत्र सोपधिः ॥

---

1 G मृते तु सः for मृते सुतः. मिता० reads पित्रंशं तु मृते समम्; वीर० 'पित्र्यमंशं मृते तु सः'.

2 G, K omit अपि after याज्ञवल्क्यः.

3 F यस्तु for यत्तु.

4 G, K धनिने for धनिनाम्.

5 B, E, F, G, K प्रातिभाव्यं च यो.

6 B, D, E, F धर्मोपाधि०.

7 G, H, K, N सुहृत्संबन्धिसंदिष्टैः.

8 D, F प्रायेण चा ऋणी.

9 D, E, F ऋणीकाद्धणी.

बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः स[1] उच्यते ॥
पुत्रदारपशून्बद्ध्वा कृत्वा[2] द्वारोपवेशनम् ।
यत्रर्णिको दाप्यतेर्थं तदाचरितमुच्यते ॥

अनुगमोनुसरणम् । प्रायः प्रार्थना । अन्वाहितमन्यस्मै[3] दापितुं दत्तमलंकारादि ॥ धर्माद्युपायानां[4] नियममाह कात्यायनः

राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत् ।
रिक्थिनं सुहृदं[5] वापि छलेनैव प्रदापयेत् ॥
वणिजः कर्षकाश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः[6] स्युर्दुष्टान्संपीड्य दापयेत् ॥

स[7] एव

धार्योवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावद्दद्यात्तदादेयं[8] देशाचारस्थितिर्यथा ॥

अवरुद्धस्य विण्मूत्रशङ्कायामवरोधनं निषेधयति[9] स एव

विण्मूत्रशङ्का यत्र स्याद्धार्यमाणस्य देहिनः ।
पृष्ठतश्चानुगन्तव्यो निबन्ध वा समुत्सृजेत् ॥

---

1 G, K स कीर्तितः for स उच्यते.
2 B, C, D, E, F, G, H, K दत्त्वा द्वारोप०. वि. र. reads रुद्ध्वा for बद्ध्वा.
3 D, E, G, H, K अन्यस्मै दातुम्.
4 K धर्मे उपायानां for धर्माद्युपायानाम्.
5 C सुहृदं चापि.
6 B, D, E, F दातव्याः for दाप्याः.
7 G omits स एव.
8 C यावदेयं तदादेयं. स्मृतिच०, वि. र. read यावन्न दद्यादेयं च and वीर० reads यावन्न दद्यात्तद्देयम्.
9 B, C, D, E, G, K निषेधति for निषेधयति; C, G, K अवरुद्धविण्मूत्र०

निबन्धं[1] स्वप्रतिनिधीभूतं पुत्रादिकम् । अवरुद्धो दर्शनप्रतिभुवं गृहीत्वा भोक्तुं मोक्तव्य इत्याह स एव

स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिने दिने ।
आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥
यो दर्शनप्रतिभुवं नाधिगच्छेन्न वाश्रयेत् ।
स चारके[2] निरोद्धव्यः स्थाप्यो[3] वावेद्य रक्षिणः ॥
न चारके निरोद्धव्य[4] आर्यः[5] प्रात्ययिकः शुचिः ।
सोनिबन्धः[6] प्रमोक्तव्यो निबद्धः शपथेन वा ॥

न वाश्रयेन्न दद्यात् । चारके कारागारे । रक्षिणो रक्षकानावेद्य स्थाप्यः । प्रात्ययिको[7] विश्वास्यः ॥ बृहस्पतिः[8]

पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी[9] ।
कारयेद्वा[10] ऋणी लेख्यं चक्रवृद्धिव्यवस्थया[11] ॥

पूर्णावधौ द्वैगुण्यादिके जाते । अत एव शान्तलाभतोपपद्यते । धनी-[12] ऋणमुद्ग्राहयेत् गृह्णीयात् । वृद्धिमपि मूले प्रक्षिप्य तस्यापि वृद्धिकरणं चक्रवृद्धिः ॥ नारदः ( ४. १३१ )

1 The स्मृतिच०, and वीर० read निबद्धं for निबन्धम्.
2 F, K वारके for चारके; K ०भिरोद्धव्यः for निरोद्धव्यः.
3 K स्थाप्यो वा येथ रक्षिणः for स्थाप्यो वावेद्य०.
4 C, H निबद्धव्यः.
5 D, F आर्यप्रत्ययितः; B, C, D, E प्रत्ययितः; A, G, K प्रत्ययिकः; H प्रत्यर्पितः.
6 स्मृतिच० and वीर० read सोनिबद्धः and वि. र. reads सोनिरुद्धः.
7 H प्रत्यर्पितो विश्वास्यः; C प्रत्ययितः; D, E, F, G, K प्रत्ययिको विश्वस्यः (K, G विश्वास्यः).
8 C omits बृहस्पतिः...जाते (l. 13).
9 D, E, F ऋणमुद्ग्रहयेद्धनी.
10 A कारयेद्वा धनी; D, E, F कारयेद्वा धर्मलिख्यम्.
11 H व्यवस्थिता for व्यवस्थया.
12 N omits धनी ऋण...गृह्णीयात्.

अथ शक्तिविहीनः स्यादृणी[1] कालविपर्ययात् ।
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम् ॥

मनुः ( ८. १७७ )

कर्मणापि समं कुर्याद्धनिकस्याधमर्णिकः ।
समोपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥

यत्तु याज्ञवल्क्यः ( २. ४३ )

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ इति

तत्र ब्राह्मणपदमुत्कृष्टजातिपरम् । स एव ( याज्ञवल्क्य २. ४० )

प्रपन्नं साधयन्नर्थं[2] न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छन् दण्ड्यो[3] दाप्यश्च तद्धनम् ॥

बृहस्पतिः

प्रतिपन्नस्य धर्मोयं व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यते ॥
न रोद्धव्यः क्रियावादी संदिग्धेर्थे कथंचन ।
आसेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ॥

आसेधो राजाज्ञयावरोधः[4] । स एव

प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम् ।
एवं यत्रर्णिको ब्रूते[5] क्रियावादी स उच्यते ॥

1 B, D, E, F ऋणी for ऋणं; F दाप्यं for दाप्यः.
2 C अर्थमवाच्यो.
3 A, B, D, F, G, H, K दण्डं दाप्यश्च.
4 C राजाज्ञया विरोधः.
5 E यत्रर्णिको ब्रूहि.

कात्यायनः

पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम्[1] ॥

बृहस्पतिः

अनावेद्य तु राज्ञे यः संदिग्धेऽर्थे प्रवर्तते ।
प्रसह्य[2] स विनेयः स्यात्स[3] चाप्यर्थो न सिध्यति ॥

यमः

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं ततः ॥

याज्ञवल्क्यः ( २. ४२ )

राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं च शतं दाप्यः प्राप्तार्थो[4] ह्युत्तमर्णिकः ॥

दशकं दशोत्तरम्[5] । दशांशो विंशांशश्चेत्यर्थः । तत्रैतावंशौ राज्ञोन्यदुत्तमर्णस्येति भावः । दशकग्रहणं निर्धनिकपरम्[6] । सधने तु विशेषमाह

नारदः ( ४. १३२ )

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशं[7] तु विंशकम् ॥

1 B, D, E, F, K वाप्नुयात् for चाप्नु०.
2 C स प्रसह्य for प्रसह्य स.
3 D, F सर्वाप्यर्थे न सिध्यति.
4 D, E, F, H प्राप्तार्थे ह्युत्तमर्णिकम् ( H ०कः ).
5 C, G, H, K read दशोत्तरं पञ्चकं पञ्चोत्तरं दशांशो; E दशांशश्चेत्यर्थः.
6 C निर्धनपरं; G निर्धनर्णिकपरम्; K दशकग्रहणं निर्धनिकपरांशधने तु विशेष०.
7 B, D, E, F omit गृहीत्वांशं तु...याज्ञवल्क्यः. नारद reads 'गृहीत्वा पञ्चकं शतम्'.

शतं प्रति विंशतिरित्यर्थः ॥

अनेकोत्तमर्णानां[1] युगपदुपस्थितौ क्रममाह याज्ञवल्क्यः ( २. ४१ )

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥

विवादरत्नाकरे कात्यायनः

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ।
तत्तदेवाग्रतो देयं राज्ञः श्रोत्रियतोनु च ॥
एकाह्ने लिखितं यत्र तत्र कुर्याद्दणं समम् ।
ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम् ॥
यस्य[2] द्रव्येण यत्पण्यं[3] साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥

याज्ञवल्क्यः ( २. ९३ )

लेख्यस्य[4] पृष्ठेभिलिखेद्दत्त्वा दत्त्वर्णिको धनम् ।
धनी वोपगतं[5] दद्यात्स्वहस्तपरिचिह्नितम् ॥

नारदः[6] ( ४. ११६ )

लेख्यं दद्याद्विशुद्धर्णे तदभावे प्रतिश्रवः ।
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ॥

1 A अनेकोत्तमवर्णानां for अनेकोत्तमर्णानाम्.
2 C यद्द्रव्येण for यस्य द्रव्येण.
3 B, D, E, F, G, K यत्पुण्यं for यत्पण्यं.
4 D, E, F लेख्यं सपृष्ठे लेखे दत्वा दत्वर्णिनः. B, D दत्त्वर्णिनो धनं for दत्त्वर्णिको धनम्.
5 C, H धनी चोपगतं; E, F स्वहस्ते परि°; K स्वहस्तपरिनिह्नवात्. K transposes the halves of the verse लेख्यस्य...च्चिह्नितम्.
6 B, D, F omit नारदः after °च्चिह्नितम्. नारद reads प्रतिभयम् for प्रतिश्रवः.

प्रतिश्रवः प्रतिदानश्रवणाय शुद्धिपत्रम् ॥ ऋणादानेधमर्णस्यानिष्ट[1]फल-माह कात्यायनः

उद्धारादिकमादाय स्वामिने न ददाति[2] यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते[3] गृहे ॥

उद्धार ऋणम् । आदिना याचितनिक्षेपयोर्ग्रहणम् । दासो[4] गर्भदासः । भृत्यो मूल्योपात्तः । नारदः ( ४. ७–८ )

याच्यमानं न दद्याच्चेदृणं वापि प्रतिग्रहम् ।
तद्द्रव्यं वर्धते तावद्यावत्कोटिशतं[5] भवेत् ॥
ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा ।
अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि ॥

प्रतिग्रहं[6] दातुं प्रतिश्रुतम् । व्यासोपि (=नारद ४. ९ )

तपस्वी चाग्निहोत्री च ऋणवान्म्रियते यदि ।
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो भवेत् ॥

बृहस्पतिः

ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं[7] समं देयं न देयं तत्सुतस्य[8] च ॥

याज्ञवल्क्यः ( २. ५० )

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेपि वा ।

1 B, C, D, E, F, G, K अनिष्टं फलम्.
2 D, E, F ददाति च for ददाति यः.
3 A, K भृत्यस्त्री; D, E, F जायते ध्रुवम् for जायते गृहे.
4 C omits दासो...प्रतिग्रहम्.
5 B, D, E, F कोटिगुणं for कोटिशतम्.
6 B, D, E, G, K, N याच्यमानं for प्रतिग्रहं; F याचमानं दानं प्रतिश्रुते.
7 E omits पैतामहं...भावितम् ( p 185 l. 1 ).
8 C तत्सुतस्य तु.

पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥

विंशतिवर्षवयसा पुत्रादिना ऋणं देयमित्याह नारदः (४. १४)

नार्वाक्[1]संवत्सराद्विंशात्पितरि प्रोषिते सुतः ।
ऋणं दद्यात्पितृव्ये च ज्येष्ठे भ्रातर्यथापि वा ॥

कात्यायनः

विद्यमानेपि रोगार्ते स्वदेशात्प्रोषितेऽथवा[2] ।
विंशात्संवत्सराद्देयमृणं पितृकृतं तथा ॥

प्रोषितपदं मृतस्याप्युपलक्षकम् । अत एव विष्णुः (विष्णुध. सू. ६. २५)—धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रोषिते वा तत्पुत्रपौत्रैर्धनं देयम् । नारदः (४. २)

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
विभक्ता अविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥

कात्यायनः

पित्रर्णे विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तद्धनिके[3] द्रव्यमृते पुत्रस्तु दाप्यते ॥

द्रव्यमृते[4] इति संबन्धः । द्रव्यं विनेत्यर्थः । बृहस्पतिः

पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं देयमेवमृणं सदा ॥

1 D, E, F अर्वाक्संवत्स० for ०नार्वाक् &c.

2 G, K प्रोषिते तथा for प्रोषितेऽथवा.

3 E तद्धनिके देयं ऋते पुत्रस्तदाप्यते; G द्रव्यमृतपुत्रस्तु; परा. मा., स्मृतिच० read द्रव्यं मृते गृह्णंस्तु दाप्यते; वीर० 'द्रव्यं मृते पुत्रैस्तु दाप्यते'.

4 F omits द्रव्यमृते...संबन्धः.

याज्ञवल्क्यः ( २. ४७ ) ।

सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्[1] ।
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥

बृहस्पतिः

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं[2] पुत्रं न दापयेत् ॥

उशनाः

दण्डं वा दण्डशेषं वा[3] शुल्कं तच्छेषमेव वा ।
न दातव्यं तु पुत्रेण यच्च[4] न व्यावहारिकम् ॥

ऋणदानाधिकारिणां क्रममाह याज्ञवल्क्यः[5] ( २. ५१ )

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥

क्लैब्यादि[6]दोषयुक्ते पुत्रे विद्यमानेपि यो न्यायेन दोषाभावेप्यन्यायेन वा तत्पितृरिक्थं हरते स रिक्थग्राहः । एवमेव परस्त्रीहृत्[7] योषिद्ग्राहः । अनन्याश्रितद्रव्यत्वं तूभयथापि । अन्याश्रि[8]तत्वरूपविशिष्टप्रतियोगिकाभावाद् द्रव्यरूपविशेषणमात्रप्रतियोगिकाभावाच्च । अत्रादौ रिक्थग्राहः तदभावे योषिद्ग्राहस्तदभावेनन्याश्रितद्रव्यः पुत्रः तदभावे पौत्रो मूलमात्रं तदभावे प्रपौत्रपत्नीकन्या[9]दयो रिक्थिनो द्रव्यग्राहिणश्चेद्युरि-

1 C ०शुल्कोवशिष्टकं; D दण्डं शुल्काव०.
2 B, D, E, G पुत्रं तु दापयेत्; F दण्डशुल्कशेषं तु.
3 B, D, E, F, G, K दण्डशेषं च; B, C, E, F, G, K शेषमेव च.
4 B, E, F तच्च न for यच्च न.
5 K, N omit याज्ञवल्क्यः रिक्थग्राह...क्लैब्यादिदोषयुक्ते.
6 B, D, E, F लेख्यादिदोष for क्लैब्यादिदोष०.
7 G, K ०स्त्रीहर्ता for स्त्रीहृत्.
8 F अन्याश्रितद्रव्यत्वं प्रतियोगिवा (?) भावाद् द्रव्यरूपविशेषण०.
9 H omits कन्यादयो...चाल्पमपि (p. 187 l. 2).

त्यर्थः । रिक्थग्रहणाभावे प्रपौत्रेण पत्न्यादिभिश्च न देयम्[1] । रिक्थं चाल्पमपि गृहीतं भूयसोपि ऋणापाकरणे[2] प्रयोजकं न तु तत्समं ततोधिकमेव वेति नियमः । पुत्रहीनस्योत्तमर्णस्य रिक्थिनो द्रव्यग्रहणाधिकारिणः पत्नीकन्यादयः पत्न्यादीनामधमर्णादृणं गृह्णीयुरित्यन्योन्तिमपादार्थः[3] । विष्णुः ( विष्णुध. सू. ६. २९ )—सपुत्रस्य वाप्यपुत्रस्य रिक्थग्राही ऋणं[4] दद्यात् इति ॥ बृहस्पतिः—स्त्रीहारी च तथैव स्याद्[5]भावे धनहारिणः ॥ कात्यायनः

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः[6] ।
द्रविणार्हश्च धुर्यश्च[7] नान्यथा दापयेत्सुतम् ॥

पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम्[8] ।
योषिद्ग्राहः सुताभावे पुत्रे वात्यन्तनिर्धने ॥

नारदः ( ४. २१ )

या तु सप्रधनैव स्त्री सापत्या चान्यमाश्रयेत्[9] ।
सोस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ॥

कात्यायनः

निर्धनैरनपत्यैस्तु यत्कृतं शौण्डिकादिभिः ।
तत्स्त्रीणामपि भोक्ता तु दद्यात्तदृणमेव[10] हि ॥

---

1 B, D, E, F omit देयं...नियमः.
2 C, H ऋणस्यापाकरणे; K भूयसोपि ऋणस्यायाप्रकारेण.
3 K, N add after अन्तिमपादार्थः the words याज्ञवल्क्यः योषिद्ग्राह... रिक्थिनः ॥ क्लैबादिदोषयुक्तस्य.
4 A, F ऋणं दद्यादित्यर्थः.
5 E omits अभावे...धुर्यश्च (l. 9).
6 D, F निरुपद्रवम् for निरुपद्रवः.
7 F तुर्यश्च for धुर्यश्च.
8 C, D, E, F, G तस्मादनन्तरः. वीर० '०निर्धनम्'; स्मृतिच० 'पुत्रो... निर्धनः'.
9 G, H, K सापत्या वान्य०.
10 H omits कात्यायनः...याज्ञवल्क्यवाक्यात्. (p. 188 l. 5).

नारदः ( ४. २३ )

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः[1] ॥ इति ।

सधनपुत्राभावे स्त्रीहारी ऋणं दद्यादित्यन्त्यपादार्थः[2] । पूर्वोक्त[3]याज्ञवल्क्यवाक्यात् ॥ कात्या[4]यनः

प्रोषितस्यामतेनापि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥

याज्ञवल्क्यः ( २. ४६ )

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥

कात्यायनः

देयं [5]प्रतिश्रुतं यत्स्याद्यच्च स्यादनुमोदितम् ॥

नारदः ( ४. ११ )

कृतं वा यद्दणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता ॥

याज्ञवल्क्यः ( २. ४८ )

गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्ता[6]सां यस्माद्वृत्तिस्तदाश्रया ॥

स एव ( याज्ञवल्क्य २. ४९ )

1 E, F धनपुत्रयोः.
2 E, F इत्यन्यपादार्थः.
3 B, C, D, E, F omit पूर्वोक्त...वाक्यात्.
4 C omits कात्यायनः...तथा (l. 10).
5 D, E ये ये प्रतिश्रुतं for देयं प्रतिश्रुतम्.
6 H पतिस्ताभ्यां for पतिस्तासाम्.

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयं[1]कृतमृणं यद्वा नान्यत्स्त्री दातुमर्हति ॥

अप्रतिपन्नमपि रिक्थग्राहिणी स्त्री दद्यात् । तथा च कात्यायनः

मर्तुकामेन या[2] भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नापि सा दाप्या धनं[3] दद्यात्स्थितं स्त्रिया[4] ॥

नारदः ( ४. २० )

पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत् ।
तस्या ऋणं हरेत्सर्वं[5] निःस्वायाः पुत्र एव तु ॥

इदं तु रिक्थग्राहपुत्रपरम् । नारदः ( ४. ३ )

पितृव्ये[6]णाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मा[7]त्रा वा यत्कुटुम्बार्थे दद्युस्तत्सर्वरिक्थिनः[8] ॥

उत्तमर्णतत्पुत्राद्यभावे ऋणदाने प्रकारमाह नारदः (४. ११२–११३)

ब्राह्मणस्य तु यद्देयं सान्वयश्च[9] न चास्ति सः ।
निर्वपेत्तत्सकुल्येषु तदभावेऽस्य[10] बन्धुषु ॥

यदा तु न सकुल्याः स्युर्न च संबन्धिबान्धवाः ।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत् ॥

---

1 C, G, K स्वयं कृतं वा यदृणं; D, E, F कृतं यवादृणम्.
2 A या पत्नी उक्ता for या भर्त्रा उक्ता.
3 अपरार्क reads धनं यत्संश्रितं स्त्रियाम्; वि. र. and वीर० 'धनं यथाश्रितं स्त्रिया'; परा. मा. 'धनं दद्यात्सुतो यथा'.
4 B, C, H स्त्रियाः for स्त्रिया.
5 C सर्वं न निस्वायाः.
6 C, D, E पितृव्येण विभक्तेन.
7 E omits मात्रा...रिक्थिनः.
8 B, D, F repeat (from preceding page) ग्राहपुत्रपरं...ऋणं कृतं after रिक्थिनः; नारद reads तद्रिक्थिनोखिलम्.
9 नारद reads सान्वयस्य for सान्वयश्च.
10 B, D, E, F स्वबन्धुषु for अस्य बन्धुषु.

प्रजापतिरपि

बन्ध्व[1]भावेपि विप्रेभ्यो देयं क्षेप्यं जलेपि वा ।
जले क्षिप्तं तथाग्नौ च धनं स्यात्पारलौकिकम् ॥

यदा[2] तु जलादौ क्षिप्ते धन्यायाति तदासौ प्राप्नोत्येव ॥

## ॥ इति[3] ऋणादानप्रकरणम् ॥ ९ ॥

## ॥ अथ निक्षेपः ॥ १० ॥

नारदः ( ५. १ )

स्वद्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥
असंख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तं जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥

बृहस्पतिः

ददतो यद्भवेत्पुण्यं हेमकुप्याम्बरादिकम् ।
तत्स्यात्पालयतो न्यासं त[4]थैव शरणागतम् ॥
स्थापितं येन विधिना येन यच्च यथा[5]विधम् ॥
तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥

---

1 B बन्ध्वोरभावे विप्रेभ्यः; E, F बन्धुरभावे.

2 B, C, D, E, F, G, H तदा स प्राप्नोत्येव. N omits यदा तु...प्राप्नोत्येव.

3 B, D, E, F read इति श्री भट्टशंकरात्मजभट्टनीलकण्ठेन कृते भगवन्तभास्करव्यवहारमयूखे ऋणादानप्रकरणम् ।; G इति श्रीभास्करे व्यवहारमयूखे ऋणादानप्रकरणम्; K इति श्रीमीमांसकभट्टनीलकण्ठकृते भगवन्तभास्करे व्यवहारमयूखे ऋणदानप्रकरणम्. C reads ०प्रकरणं समाप्तम्.

4 C, H, K यथैव शरणागतम्.

5 D, E, K यथाविधि.

न्यासो निक्षेपः । [1]प्रत्यनन्तरः स्थापयितुः संनिहितः । मनुः (८. १९१)

योे निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम्[2] ॥ इति ।

[3]बृहस्पतिः

भेदेनोपेक्षया [4]न्यासं ग्रहीता[5] यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यं तत्सोदयं भवेत् ॥

भेदः स्वद्रव्यतारतम्यम् । तेन स्वद्रव्येण सहोपेक्षया नाशे न दोषः । याज्ञवल्क्यः (२. ६७)

आजीवन्[6] स्वेच्छया दण्ड्यो दाप्यस्तं[7] चापि सोदयम् ॥

आजीवन् भोगवृद्ध्यर्थप्रयोगादिनोपजीवन् । उदयो वृद्धिः । तस्यां[8] विशेषमाह कात्यायनः

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानं न चेद्दद्याद्वर्धते पञ्चकं शतम् ॥ इति ।

मनुः (८. १९२)

निक्षेपस्यापहर्तारं तत्समं दापयेद्दमम् ।
तथोपनिधिहर्तारं विशेषेणैव[9] पार्थिवः ॥

1 B, C, D, E, G, K, N omit प्रत्यनन्तरः...हितः.
2 A, M omit इति after दमम्.
3 D, F omit बृहस्पतिः...स्वद्रव्येण सहो० (l. 7).
4 B, F omit न्यासं ग्रहीता...सहोपेक्षया.
5 K गृहीत्वा for ग्रहीता.
6 B आजीवत्स्वेच्छया (य) श्च दाप्यस्तच्चापि; D, E, F आजीवत्स्वेच्छया वश्च and दाप्यस्तच्चापि; K स्वेच्छया दद्याद्दाप्यस्तत्रापि.
7 C, D, H तच्चापि सोदयम्.
8 B, D, E, F तस्या विशेष०.
9 मनु० reads ०हर्तारमविशेषेण पार्थिवः.

बृहस्पतिः

दै[1]वराजोपघातेन यदि तन्नाशमाप्नुयात् ।
ग्रहीतृ[2]द्रव्यसहितं तत्र दोषो न विद्यते ॥

याज्ञवल्क्यः ( २. ६६ )

[3]न दाप्योपहृतं तत्तु राजदैविकतस्करैः ॥

[4]मनुः ( ८. १८६ )

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यन[5]न्तरे ।
न स राज्ञाभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

प्रत्यनन्तरः संनिहितः । प्रमाणं विनाधिकविषये नाभियोज्य[6] इत्यर्थः ॥ सर्वमप्यमुं निक्षेपन्यायमन्यत्राप्यतिदिशति बृहस्पतिः

अन्वाहिते याचितके शिल्पिन्यासे सबन्धके ।
एष एवोदितो धर्मस्तथा च शरणागते ॥

अन्वाहितममुकेन मयि स्थापितं च[7] त्वया तस्मै देयमिति पुरुषान्तरहस्तेर्पितम् । याचित[8]मुद्वाहादौ शोभाद्यर्थं नीतमलंकारादि । शिल्पिन्यासो हेमकारादिषु कुण्डलाद्यर्थं निक्षिप्तम् । नारदोपि ( ६. १४ )

---

1 C, D, E, F, H देवराजोप०.
2 A, B, D, M गृहीतद्रव्य० for ग्रहीतृद्रव्य.
3 D, E, F न दाप्योपकृतं तत्तु.
4 B, D, E, F, G, K omit मनुः before स्वयमेव.
5 D, E, F प्रत्यनन्तरं for प्रत्यनन्तरे.
6 B, D, E, F नाभियोज्यत इत्यर्थः.
7 B, C, G, K omit च after स्थापितम्. G reads तत्त्वया.
8 E omits याचित...निक्षिप्तम्.

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

प्रतिन्यासः स्वामिना यत्र निक्षिप्तं तेनाप्यन्यत्र निक्षिप्तम् । राजदैवादिनष्टस्यापि [1]शिल्पिन्यस्तस्य क्वचित्प्रतिदानमाह कात्यायनः

यश्च संस्क्रियते न्यासो दिवसैः [2]परिनिष्ठितैः ।
तदूर्ध्वं[3] स्थापयेच्छिल्पी दाप्यो दैवाद्धृतेपि तम् ॥

नारदः[4] ( १२. ८–९ )

मूल्याष्टभागो हीयेत[5] सकृद्धौतस्य वाससः ।
द्विः पादस्त्रिस्तृतीयांशश्चतुर्धौतेर्धमेव च ॥
अर्धक्षयात्तु परतः पादांशापचयः क्रमात् ॥

याज्ञवल्क्यः ( २. २३८ )

वसानस्त्रीन् पणान् दण्ड्यो [6]नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥

अवक्रयो भाटकं गृहीत्वान्यत्रार्पणम् । आधानमाधीकरणम् । सुवर्णभिन्नधातावग्नौ ध्मायमाने ह्रासनियम[7]माह स एव ( याज्ञवल्क्य २. १७८ )

अग्नौ सुवर्णमक्षीणं रजते द्विप[8]लं शते ।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि ॥

---

1 A, B, M शिल्पिनस्तस्य for शिल्पिन्यस्तस्य; K शिल्पिन्यासस्य.
2 स्मृतिच॰ reads परिनिश्चितैः.
3 B, D, E, F तदूर्ध्वैः for तदूर्ध्वम्.
4 B, C, D, E, F, H omit नारदः...क्रमात्.
5 G, K read ॰भागे हीयते.
6 D, E, F रजकस्तु for नेजकस्तु.
7 B ॰नियमो नाह स एव.
8 D, E, F द्विपलं शतम्.

इतोधिके रूप्यादेः क्षये हेमकारादेर्दण्डः[1]। क्वचिद्वस्त्राद्यर्थं तन्तुसमर्पणे[2] वृद्धौ विशेषमाह स एव ( याज्ञवल्क्य २. १७९ )

शते दशपला वृद्धिरौर्णकार्पाससौत्रिके ।
मध्ये पञ्चपला वृद्धिः सूक्ष्मे[3] तु त्रिपला मता ॥

क्वचित् क्षयमाह स एव ( याज्ञवल्क्य २. १८० )

कार्मिके रोमबद्धे[4] च त्रिंशद्भाग[5]क्षयो मतः ।
न क्षयो न च वृद्धिश्च कौशेये वल्कलेषु च ॥ इति ।

कार्मिके सिद्धपट्टादौ पट्टसूत्रादिना स्वस्तिकाद्याकारनिर्माणे । नियतावधिके शिल्पिन्यस्ते[6]वधिमध्ये याचिते दत्ते नष्टेपि च शिल्पिनो दोषाभावमाह स एव

यदि तत्कार्यमुद्दिश्य कालं परिनियम्य वा ।
याचितो[7]र्धकृते तस्मिन्नप्राप्ते[8] तु न दाप्यते[9] ॥

एतद्विपर्ययमाह स एव

प्राप्तकाले कृते कार्ये न दद्याद्याचितोपि सन् ।
तस्मिन्नष्टे हृते वापि ग्रहीता मूल्यमावहेत् ॥

1 C हेमकरादेर्दण्डः.
2 E, F तन्तुसंसर्पणे.
3 B, C सूक्ष्मेषु त्रिपला.
4 B, C, D, E, F, G, H, K रोमबन्धे च.
5 F, G, K त्रिंशद्भागः क्षयः.
6 A शिल्पिभ्यस्तदवधि॰.
7 B, D, E, F याचितोनाकृते.
8 B, C, D, E, F, G, K अप्राप्ते न तु दाप्यते.
9 G, K, N read अवक्रयो भाटकं गृहीत्वा अन्यत्रार्पणम् after दाप्यते.

स एव

यो याचितकमादाय न दद्यात्प्रतियाचितः ।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः ॥

## ॥ [1]इति निक्षेपप्रकरणम् ॥ १० ॥

## ॥ अथास्वामिविक्रयः ॥ ११ ॥

व्यासः

याचितान्वाहितन्यासं हृत्वा[2] चान्यस्य यद्धनम् ।
विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रयः ॥

कात्यायनः

अस्वामि विक्रयं दानमाधिं वा विनिवर्तयेत् ॥

अस्वामीति पृथक् पदं क्रियाविशेषणं च । नारदः[3] ( ७. २–३ )

प्रकाशतः क्रयः शुद्धः क्रेतुः स्तेयं रहः क्रयात्[4] ॥
अस्वाम्यनुमताद्दासाद्[5]सतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ॥

तद्दोषः चौरदोषः । याज्ञवल्क्यः ( २. १७१ )

1 B, D, E, F, G इति व्यवहारमयूखे निक्षेप०; G इति भास्करे व्यवहार०; K इति भगवन्तभास्करे व्यवहारमयूखे निक्षेप०.
2 D, E, F दत्त्वा for हृत्वा.
3 B, C, D, E, G, H, K नारदोऽपि. F omits प्रकाश...क्रयात्. नारद reads प्रकाशविक्रये शुद्धिः...क्रमात्.
4 B, C, D, E, K add नारदः after क्रयात्.
5 F दासाद्सनं च.

आगमेनोपभोगेन नष्टं भाव्यमतोन्यथा ।
पञ्चबन्धो दमस्तस्य राज्ञे तेना[1]विभाविते ॥

पञ्चबन्धो नष्टद्रव्यपञ्चमांशः । नाष्टिकोपन्यस्तसाक्षिणां विरुद्धोक्तौ नष्टद्रव्याद्द्विगुणं दण्डमाह व्यासः

वादी चेन्मार्गितं द्रव्यं साक्षि[2]भिर्न विभावयेत् ।
दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद्द्र[3]व्यमर्हति ॥ इति ।

क्रेतुः कृत्यमाह स एव

मूले समाहृते क्रेता नाभियोज्यः कथंचन ।
मूलेन सह वादस्तु नाष्टिकस्य विधी[4]यते ॥

बृहस्पतिः

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेत्रे राज्ञे मूल्यदण्डौ प्रदद्यात्स्वा[5]मिने धनम् ॥

कात्यायनः

असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।
मूलानयनकालश्च तत्र देयोध्वसंख्यया ॥
विशोधिते क्रये राज्ञा वक्तव्यः स न किंचन ॥
अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम् ।
पश्चादासविशुद्[6]ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥

1 C तेनाभिभाविते.
2 C साक्षितं न विभावयेत्.
3 B, D, E, F तद्वाच्यमर्हति. A, M omit इति after अर्हति.
4 B विधार्यते for विधीयते.
5 B, C, D, E, F, G, H स्वामिनो धनम्; K स्वामिनो धने.
6 C °शुद्ध्यर्थं क्रेता.

क्रेत्रा क्रये साधितेपि द्रव्यं नाष्टिक एव लभते । तथा च मनुः (८. २०२)

अथ मूलं[1]मनाहार्यं प्रकाशक्रयशोधितम् ।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

अनाहार्यप्रदर्श्यं प्रकाशेन क्रयेण शोधितं[2] द्रव्यमित्यर्थः । कात्यायनः

अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

बृहस्पतिः

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः[3] ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा[4] मृतः ॥
स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीत[5] स्वकं धनम् ।
अर्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः ॥

मरीचिः

अविज्ञात[6]निवेशत्वाद्यत्र मूलं न लभ्यते ।
हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयोः ॥

निवेशो विक्रेतृस्थलम् । नारदः

उद्दिष्टमेव भोक्तव्यं स्त्री पशुर्वसुधापि वा ।
अनर्पितं[7] तु यो भुंक्ते[8] भुक्तभोगं प्रदापयेत् ।

---

1 अपरार्क reads मूल्यं for मूलम्.
2 C, H omit द्रव्यं after शोधितम्.
3 D, E, F राजपुरुषं for ०पूरुषैः.
4 F यत्र चामृतः.
5 D, E, F प्रगृह्णीतस्तु स्वबन्धनम्.
6 अपरार्क reads अविज्ञातविशेषत्वात् for ०निवेशत्वात्.
7 E अर्पितं तु.
8 C भुङ्क्ते भुङ्क्ते भोगं; E भुक्तभागं; K भुक्त्वा भोगम्.

उद्दिष्टमनुज्ञातम् । भुक्तभोगं[1] भोगानुरूपकं भाटकम् ॥ याज्ञवल्क्यः (२. १७३)

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत[2] परतो नृपः ॥

यत्तु मनुः (८. ३०)

प्रनष्टस्वामिकं[3] द्रव्यं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥ इति ।

तच्छ्रोत्रिय[4]स्वामिकद्रव्यविषयम् । स एव (मनु ८. ३३)

आददीताथ षड्भागं प्रणष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥ इति ।

[5]तत्र प्रथमे वर्षे सर्वं दद्यात् । [6]द्वितीये वर्षे द्वादशं भागं गृहीत्वा दद्यात् । [7]तृतीये वर्षे दशमम् । चतुर्थादौ षष्ठमिति । हरेत[8] परतो नृप इत्येतत्स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञामात्रपरं, आगते तु स्वामिनि व्ययीकृतमपि देयमिति[9] मिताक्षरायाम् । इदं तु[10] स्वामिनोऽज्ञाने । यदा त्वमुक इदं द्रव्यं विस्मृत्य गत इत्यवधारणं तदा

---

1 B, D, E, F भुक्तभोगानुरूपं; C, H, K भोगानुरूपम्.
2 C, D, E, F हरते परतो नृपः.
3 A, M प्रनष्टस्वामिनो द्रव्यम्.
4 C, H, K तच्छ्रोत्रियविप्रस्वामि०.
5 G, K omit तत्र प्रथमे वर्षे...कंचिद्गृह्णीयादेव (p.199 l. 2). E प्रथमवर्षे.
6 D, E, F द्वितीयवर्षे द्वादशभागम्.
7 B, C, D, E, F तृतीये दशमम्.
8 D, E, F, H हरते परतो.
9 C, H दद्यात् for देयम्.
10 B, C, D, E, F इदं च स्वामिनः.

त्रिवर्षादूर्ध्वमपि लभते । राज्ञोपि न व्ययाद्यधिकारः । भागं तु कंचिद्गृह्णीयादेव । परस्वामिकनष्टलब्धपशूनामेकदिनरक्षणे भृतिमाह याज्ञवल्क्यः ( २. १७४ )

पणा[1]नेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजा[2]विके ॥

भक्षितं तु देयमेव ॥

निधिप्रा[3]प्तौ याज्ञवल्क्यः ( २. ३४–३५ )

राजा लब्ध्वा निधिं दद्याद्विजेभ्योर्धं द्विजः पुनः ।
विद्वानशेषमादद्यात्स सर्वस्य प्रभु[4]र्यतः ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदि[5]तविज्ञानो दाप्यस्तं दण्डमेव च ॥ इति ।

यदा तु कश्चिच्चिह्नमानादिना स्वकीयं निधिं भावयति तदाधिगन्त्रे द्वा[6]दशं भागं दत्त्वा स्व[7]यं षष्ठं गृहीत्वा [8]तस्मै दद्यात् । यदाह मनुः ( ८. ३५ )

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः ।
तस्याददीत षड्भागं राजा द्वादशमे[9]व च ॥ इति ।

---

1 B, D, E, F पणमेकशफे.
2 D, E अजादिके for अजाविके.
3 G, K, N omit from निधिप्राप्तौ to महीभृतेति ( p. 200 l. 6 ).
4 C प्रभुर्मतः.
5 B, C, D, E, F, H अनिवेदितविज्ञाने. The printed editions of याज्ञवल्क्य read अनिवेदितविज्ञातः.
6 C, D, H द्वादशभागम्
7 C, H स्वषष्ठम्.
8 D omits from तस्मै दद्यात् up to देयमाह ( some pages below ). F omits only तस्मै दद्यात्.
9 B, F द्वादशमेव वेति.

द्वादशस्त्वधिगमे । चौरैर्[1]हृतं प्रत्याह स एव ( मनु ८. ४० )

दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् ।
राजा तदुपभुञ्जा[2]नश्चौरस्याप्नोति किल्बिषम् ॥

यदा त्वाहरणेशक्तस्तदाह कृष्णद्वैपायनः

प्रत्याहर्तुमशक्तस्तु धनं चौरैर्हृतं यदि ।
स्वकोशात्तद्धि देयं स्यादशक्तेन महीभृता ॥ इति ।

## ॥ इत्यस्वामिविक्रयनिरूपणम् ॥ ११ ॥

## ॥ अथ संभूयसमुत्थानम् ॥ १२ ॥

नारदः ( ६. ७. )

वणिक्प्रभृतयो यत्र कर्म संभूय कुर्वते ।
तत्संभूयसमुत्थानं व्यवहारपदं स्मृतम् ॥

बृहस्पतिः

बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद्वापि सर्वैरेव कृतं भवेत् ॥

परीक्षकाः साक्षिणस्तु त एवोक्ताः परस्परम् ।
संदिग्धेर्थे वञ्चनायां न चेद्विद्वेषसंयुताः ॥

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः सोपि शोध्यः स्यात्सर्ववादेष्वयं विधिः ॥

---

1 B, C, E, F, H चौरैर्धनं हृतम्. G–the pages of this ms. got disarranged from this place.

2 C, E, F उपयुञ्जानः for उपभुञ्जानः.

याज्ञवल्क्यः (२. २६५, २६० )

जिह्मं त्यजेयुर्निर्लोभमशक्तोन्येन कारयेत्[1] ॥
प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च[2] नाशितम् ।
स[3] तद्दद्याद्विप्लवाच्च रक्षिताद् दशमांशभाक् ॥

कात्यायनः

शिष्यकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

शिष्यका[4]: शिष्याः । अभिज्ञा ज्ञानवन्तः कुशला दक्षाः । आचार्या नूतनमार्गप्रवर्तकाः । बृहस्पतिः

हर्म्यं देवगृहं वापि धार्मिकोपस्करा[5]णि च ।
संभूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति ॥

स एव

नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो[6] लभते त्वर्धं गायनास्तु समांशिनः ॥

कात्यायनः

तेषां चेत्प्रसृतानां च ग्रहणं समवाप्नुयात् ।

---

1 B, E, F त्यजेयुर्निलाभ अशोक्तो ( F ०भे ); C त्यजेयुर्निर्लोभशक्तो.
2 F प्रसादाद्यच्च.
3 G, K omit स...भाक्.
4 E, F शिल्पिकाः शिष्याः. अपरार्क, वि. र., वि. चि., वीर० read शिक्षकाभिज्ञ०.
5 B, E, F, G, H वार्मिकोपस्कराणि; K चर्मिकोप०. The स्मृतिच०, वि. र., वि. चि. read चार्मिकोपस्कराणि; वीर० reads वान्धिकोप०.
6 B, K लभतेध्यर्धः गायनाः; E, F लभतेध्यर्द्धं; अपरार्क, स्मृतिच०, वि. र., वि. चि. and वीर० read लभतेध्यर्धम्.

तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः ॥
वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष[1] निर्णयः ॥

## ॥ इति संभूयसमुत्थानम् ॥ १२ ॥

## ॥ अथ दत्ताप्रदानिकम्[2] ॥ १३ ॥

नारदः ( ७. १ )

दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥

असम्यगिति क्रियाविशेषणं निषिद्धमित्यर्थः । स एव ( नारद ७. २, ४, ५)

अथ देयमदेयं च दत्तं चा[3]दत्तमेव च ।
व्यवहारे[4] स विज्ञेयो दानमार्गश्चतुर्विधः ॥
अन्वाहितं याचितकमाधिः साधारणं च यत्[5] ।
निक्षेपं पुत्रदारां[6]श्च सर्वस्वं चान्वये सति ॥
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

अत्र पुत्रदारान्तेषु स्वत्वाभावात्तद्विषये नान्तरिक्षे न दिवि—इतिवन्निषेधानुवादमात्रम् ॥ एतेन स्व[7]कुटुम्बाविरोधेन देयं दारसुतादृते—इति याज्ञवल्कीयः (२. १७५) पर्युदासोपि[8] व्याख्यातः । पुत्र-

1 F, K सर्वेषामेव.
2 B, C, E, F, G, K दत्ताप्रदानम्.
3 G, H दत्तं वादत्तमेव.
4 B, C, E, F व्यवहारसविज्ञेयो.
5 C साधारणं च तत्.
6 B, E, F, G, H, K पुत्रदारं च.
7 The printed याज्ञवल्क्यस्मृति reads स्वं कुटुम्बा०.
8 F omits ०पि व्याख्यातः पुत्र०.

दारेषु स्वत्वाभावः पूर्वमुपपादितः स्वत्वविवादे[1]। एतद्दाने न केवलं व्यवहारासिद्धिः किं तु प्रायश्चित्तमपीत्याहैतानि प्रकृत्य दक्षः

यो ददाति स मूढात्मा प्रायश्चित्तीयते[2] नरः ॥

मनुः

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम्[3] ॥ इति ।

देयमाह बृहस्पतिः

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ॥

अवश्यदेयमाह[4] कात्यायनः

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥

गौतमः ( गौ. ध. सू. ५. २१ ) प्रतिश्रुत्याप्यधर्मसंयुक्ताय[5] न दद्यात्—इति । वृत्तेर्दानविक्रयौ[6] प्रतिषेधति व्यासः

ये जाता येऽप्यजाताश्च ये च गर्भेष्ववस्थिताः[7] ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः ॥ इति ।

दत्तादत्तभेदानाह नारदः[8] ( ७. ३, ८ )

---

1 B, C, H, K स्वत्ववादे; E, F, G सत्त्ववादे.

2 C प्रायश्चित्तायते.

3 G, K साहसमिति बृहस्पतिः.

4 H, K omit अवश्यदेय...दद्यादिति. C, G, H, K read वृत्तेर्दान-विक्रयौ...विक्रय इति ( K विक्रयामिति ) before अवश्यदेयमाह.

5 C अधर्मसहिताय.

6 A, D, M read दानक्रयौ for दानविक्रयौ.

7 D, E, F गर्तेष्ववस्थितः.

8 B, D, E, H omit नारदः. नारदस्मृति reads 'स्त्रीभक्त्यनुग्रहार्थं च दत्तं सप्तविधं स्मृतम्'.

दत्तं सप्तविधं प्रोक्तमदत्तं षोडशा[1]त्मकम् ॥
पण्यमूल्यं भृतिस्तुष्ट्या स्नेहा[2]त्प्रत्युपकारतः ॥
स्त्रीशुल्कानुग्रहार्थाय दत्तं दानविदो विदुः ॥

अनुग्रहो धर्मः । नारदः (७. ९–११)

अदत्तं तु भयक्रोध[3]शोकवेगरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
[4]कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये वाध[5]र्मसञ्ज्ञिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥

रुगुपतापः । भयादिकृतोपतापान्वितैरित्य[6]न्वयः । ताडनादिभयाद्युपतप्तेन दत्तमित्यर्थः । एवं भ्रात्रादिक्रोधाद्व्ययो भवत्विति बुद्ध्या दत्तम् । व्यत्यासो रूप्यं दातुं प्रवृत्तेन भ्रमात्सुवर्णं दत्तम् । छलयोगतः देवदत्ताय राज्ञा गौर्देयेति ज्ञा[7]त्वा गृहीतदेवदत्तवेषायान्यस्मै पात्रभूतायापि दत्ता[8] । आर्तो रोगेणास्थिरचित्तः । मत्तो मदनीयद्रव्येण । उन्मत्तो वातादिना । अपवर्जितं दत्तम् । मामकम[9]यं कर्म करिष्यतीति कर्माकुर्वाणाय दत्तम् । अधर्मविनियोक्त्रे धर्मं करिष्यतीति बुद्ध्या दत्तम् । एतानि परावर्तन्ते ॥ कात्यायनः

---

1 B omits षोडशात्मकं...अदत्तम्.
2 D, E, F, H, K भेदात् for स्नेहात्.
3 नारदस्मृति reads ०क्रोधद्वेषशोकरुगन्वितैः.
4 B, D, E, F ममायं कर्तेति.
5 नारदस्मृति reads अधर्मसंहिते and so does स्मृतिच०. मिता० reads ०संहिते.
6 B, D, E, F ०न्वितैरित्यर्थेनान्वयः.
7 A राज्ञा for ज्ञात्वा.
8 B, C, D, E, H, K ०भूतायापि दत्तम्.
9 B, D, E omit from अयं कर्म...सान्वया तु सा (p. 210).

कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहाराय[1] यद्दत्तं तत्पुनर्हरेत् ॥

कामात्[2]परस्त्रीवञ्चनार्थम् । क्लीबो भीतः । व्यत्यासपरिहाराय दत्त[3]मुत्कोच इत्यर्थः ।

यस्तु कार्यस्य सिद्ध्यर्थमुत्कोचः स्यात्प्रतिश्रुतः ।
तस्मिन्नपि प्रसिद्धेर्थे न देयः स्यात्कथंचन ॥
अथ प्रागेव दत्तश्चेत्प्रतिदाप्यस्ततो बलात् ।
दण्डं चैकादशगुणमाहुर्गार्गीय[4]मानवाः ॥

उत्कोचस्वरूपमाह स एव

स्तेय[5]साहसिकोद्वृत्तपारदारिकशंसनात् ।
दर्शना[6]न्नष्टवृत्तस्य तथासत्यप्रवर्तनात् ॥
प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते[7] ॥

मनुः ( ८. १६५ )

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यस्य चाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्[8] ॥ इति ।

---

1 अपरार्क reads व्यत्यासात्परिहासाच्च; स्मृतिच० 'व्यत्यासपरिहासाच्च'; वि. चि. 'व्यत्यासपरिहासाभ्याम्'.

2 H कामात्परस्त्रीवचनादम्पत्यर्थं क्लीबो भीतः.

3 H omits इत्यर्थः...मुत्कोचः (l. 5).

4 वि. चि. reads गार्गीयगालवाः.

5 A, F, H स्नेह for स्तेय. अपरार्क, स्मृतिच०, वि. चि. reads स्तेन for स्तेय. अपरार्क reads पारजापिक; स्मृतिच० 'पारजायिक'.

6 G दर्शनावृत्तनष्टस्य; K दर्शनाद्वृत्तनष्टस्य. अपरार्क read दर्शनाद्धृतनष्टस्य; स्मृतिच०, वि. र., वि. चि. and वीर० read दर्शनाद् वृत्तनष्टस्य.

7 H तदिष्यते.

8 C, F, K omit इति after विनिवर्तयेत्.

योग उपधिः । यस्य[1] चाप्यन्यस्यापि कार्यस्य । तत्सर्वमुपध्यपगमे परावर्तेत इत्यर्थः ॥ कात्यायनः

स्वस्थेनार्तेन[2] वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

अत्र विस्तरो गुरुकृते द्वैतनिर्णये द्रष्टव्यः ॥

## ॥ इति दत्ताप्रदानिकम्[3] ॥ १३ ॥

## ॥ अथाभ्युपेत्याशुश्रूषा ॥ १४ ॥

नारदः ( ८. १ )

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥

तत्र शुश्रूषकत्रैविध्यमाह[4] बृहस्पतिः

आयुधी तूत्तमः प्रोक्तो मध्यमस्तु कृषीवलः ।
भारवाहोधमः प्रोक्तस्तथा च गृहकर्मकृत् ॥

नारदः[5] ( ८. २४ )

सर्वेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि ।
सोधिकर्मकृतो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥

कात्यायनः

स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः ।
त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ॥

---

1 A, C, F यस्य वान्यस्यापि ( F अन्यस्य वापि ).

2 F परावर्तेन ( त? ) वा दत्तं श्रावितं ( omitting a few words ).

3 C, H इति दत्ताप्रदानकनिर्णयः; G ०प्रदायिकनिर्णयः. F, K ०दानिकनिर्णयः.

4 H त्रैविध्यमाह कुटुम्बस्य तथोपरि ( omitting two lines ).

5 नारदस्मृति reads अर्थेषु for सर्वेषु; स्मृतिच०, वीर०, परा. मा. read सोधिकर्मकृतो ज्ञेयः.

वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।
राजन्यवैश्यशूद्राणां त्यजतां[1] हि स्वतन्त्रताम् ॥

नारदः ( ८. ३९ )

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ॥

कात्यायनः

प्रव्रज्यावसिता[2] यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रिये भृगुः[3] ॥

क्षत्र[4]ग्रहणं विट्शूद्रयोरुपलक्षणम् । विप्र[5]निर्वासनप्रकारमाहतुर्दक्षनारदौ ( दक्ष ७. ३३ )

परिव्रज्यां[6] गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेत् ॥

कात्यायनः

सवर्णेपि तु विप्रे तु दासत्वं नैव कारयेत् ॥
शीलाध्ययनसंपन्ने तदूनं कर्म कामतः ।
तत्रापि नाशुभं किंचित्प्रकुर्वीत द्विजोत्तमः ॥

मनुः ( ८. ४११ )

---

1 A त्यजतां हि स्वतन्त्रता.

2 H omits प्रवज्यावसिता...कात्यायनः.

3 G, K क्षत्रवद्भृगुः. अपरार्क reads क्षत्रविण्नृपः; वि. र. 'क्षत्रविट्नृपः'; वीर० 'क्षत्रविड्भृगुः'.

4 G, K omit क्षत्र...लक्षणम्.

5 F विप्रनिवासन०.

6 K पारिव्राज्यं for परिव्रज्याम्. अपरार्क, स्मृतिच० and वीर० read पारिव्राज्यम्.

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ[1] ।
बिभृयाद[2]नृशंस्येन स्वामिकर्म तु कारयेत् ॥

स्वा[3]मिकर्म उत्तमं तद्योग्यमित्यर्थः ॥ कात्यायनः

आदद्याद्ब्रा[4]ह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥
कामात्तु संश्रितां यस्तु कुर्याद्दासीं कुलस्त्रियम् ।
संक्रामयेत वान्यत्र दण्ड्यस्तत्राकृतं भवेत् ॥
बालधात्रीमधा[5]त्रीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं च प्राप्नुयात्पूर्वसाहसम् ॥

विष्णुः (विष्णुध. सू. ५. १५१ )– यस्तूत्तमं वर्णं [6]दास्येभियोजयति तस्योत्तमसाहसो दण्डः । कात्यायनः

विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन् प्राप्नुयात्पूर्वसाहसम् ॥

दासभेदानाह नारदः ( ८. २६–२९, ३७, ३० )

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अना[7]कालभृतस्तद्वदाहितः स्वामिना च यः ॥

---

1 A वृत्तिकर्षितः; K वृत्तिकर्शितम्.

2 A, M बिभृयादानुशंस्येन. The मनुस्मृति, अपरार्क, स्मृतिच०, वि. र. read स्वानि कर्माणि कारयेत्; वीर० reads स्वामी कर्माणि कारयन्.

3 G, K omit स्वामिकर्म...मित्यर्थः.

4 A आदद्याद् ब्राह्मणो यस्तु.

5 अपरार्क reads महादासीं for अधात्रीम्; वि. र. and वीर० read अदासीं for अधात्रीम्.

6 C, G, F, K दास्ये नियोजयति. H omits विष्णुः । यस्तूत्तमं... साहसम्.

7 H omits अनाकालभृत...आमरणान्तिकम् । नारदः ( p. 209 l. 12 ).

मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥
तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते[2] ।
प्रसादात्स्वामिनोन्यत्र दास्यमेषां क्रमागतम् ॥
विक्रीणीते स्वतन्त्रः सन् य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोपि दास्यान्न[3] मुच्यते ॥
यो वैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् ।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥

याज्ञवल्क्यः ( २. १८३ )

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ॥

नारदः[4] ( ८. ३१–३४, ३६ )

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
आहितोपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत् ॥
ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते ।
तवाहमित्युपगतो[5] युद्धे प्राप्तः पणे जितः ॥
प्रतिशीर्षप्रदानेन मुच्येरन्[6]नल्पकर्मणा ।
कृतकालव्यपगमात्कृतो दासो विमुच्यते ॥

1 F विक्रेतात्मनः.
2 F निवर्तते for विमुच्यते.
3 C, F दासात् for दास्यात्.
4 C omits नारदः.
5 H omits तवाहमित्यु...दासो विमुच्यते. नारद reads ध्वजप्राप्तः पणार्जितः for युद्धे प्राप्तः पणे जितः.
6 नारद reads मुच्यते तुल्यकर्मणा. The मिता०, स्मृतिच०, वि. र., वि. चि., वीर० read तुल्यकर्मणा.

भक्त[1]स्योपेक्षणात्सद्यो भक्तदासः प्र[2]मुच्यते ।
निग्रहाद्वडवायास्तु मुच्यते वडवाभृतः ॥ इति ।

प्रतिशीर्षः प्रतिनिधिः । वडवा[3] दासी ॥ याज्ञवल्क्यः ( २. १८२ )

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ॥

नारदः ( ८. ४० )

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति ।
न स तं प्राप्नुयात्कामं पूर्वस्वा[4]मी लभेत तम् ॥

अस्वतन्त्रः परदासः । अस्मिन्प्रकरणे दासपदगतपुंस्त्वस्याविवक्षितत्वाद्दास्यामप्येष सर्वो विधिर्ज्ञेयः ॥ तत्र दासीत्वविमोककारणमाह कात्यायनः

स्वां दासीं यस्तु संगच्छेत्प्रसूता च भवेत्ततः ।
अवेक्ष्य वीजं कार्या स्याददासी सान्वया तु सा ॥

बीज[5]मपत्यं गुणवदवेक्ष्येत्यर्थः ॥ नारदः ( ८. ४२–४३ )

स्वं [6]दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥
साक्षताभिः सपुष्पाभिर्मूर्धन्यद्भिर[7]वाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥

---

1 The मिता०, स्मृतिच०, वीर० read भक्तस्योत्क्षेपणात्.

2 F omits प्रमुच्यते...प्रतिशीर्षः.

3 F omits वडवा दासी.

4 M पूर्वास्वामी.

5 F omits from बीजमपत्यं to गोपस्ताड्यस्तु गो० ( स्वामिपालविवादे ). G, K omit बीज...त्यर्थः.

6 C, H स्वं दासं कर्तुमिच्छेद्यस्त्वदासम्.

7 D, E अवाकिरन् for अवाकिरेत्.

ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोथ प्रतिग्राह्यो भवत्यभिमतः सताम् ॥

कात्यायनः

दासेनोढा त्वदासी या सापि[1] दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः[2] ॥
दासस्य तु धनं यत्स्यात्स्वामी तस्य प्रभुर्मतः । इति ।

## ॥ इत्यभ्युपेत्याशुश्रूषा[3] ॥ १४ ॥

## ॥ अथ वेतनादानम् ॥ १५ ॥

नारदः ( ९. १ )

भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

याज्ञवल्क्यः ( २. १९४ )

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥

एतदल्पायासपरम् । आयासबहुत्वे तु[4] बृहस्पतिः

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।
भक्ताच्छादभृतः सीराद्भागं गृह्णीत पञ्चमम् ॥
जातसस्यात्त्रिभागं तु प्रगृह्णीयाद्[5]यथाभृतः ॥

भक्ताच्छादभृतः अन्नवस्त्रदानेन पोषितः ।

---

1 अपरार्क reads सा दासात्स्वत्वमाप्नुयात् and notices a reading दासात्सत्वमाप्नु०.

2 C, G, H, K प्रभुः स्मृतः.

3 M ०शुश्रूषाप्रकरणम्.

4 D, H omit तु after आयासबहुत्वे.

5 B, D read प्रगृह्णीयादथाभृतोन्नवस्त्र०; E प्रगृह्णीयादथाभृतो वस्त्रदानेन.

नारदः ( ९. ५ )

कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् ।
भृतिं गृहीत्वाकुर्वाणो द्विगुणां[1] भृतिमाप्नुयात् ॥

मनुः ( ८. २१५ )

भृतोनार्तो न यः कुर्याद्दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलानष्टौ[2] न देयं चास्य वेतनम् ॥

स एव ( मनु ८. २१७, २१६ )

यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥
आर्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादितः ।
सुदीर्घस्य कालस्यापि स्वं[3] लभेतैव वेतनम् ॥

विष्णुः ( विष्णुध. सू. ५. १५३–१५४ ) भृतकश्चा[4]पूर्णे काले त्यजन्सकलमेव मूल्यं जह्याद्राज्ञे च पणशतं दद्यात्—इति । स एव ( विष्णुध. सू. १५७–१५९ ) स्वामी[5] चेद्भृतकमपूर्णे काले जह्यात्तस्य सर्वमेव मूल्यं दद्यात्पणशतं[6] च राज्ञे[7]न्यत्र भृतकदोषात् ॥ वृद्धमनुः

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोह[8]नाशितम् ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन च[9] ॥

---

1 E द्विगुणं for द्विगुणाम्. नारदस्मृति, अपरार्क, and वीर० read भृतिमावहेत्.

2 मनुस्मृति reads कृष्णलान्यष्टौ and so do मिता० and अपरार्क.

3 A, B, C, D, H स लभेतैव; D, E स दीर्घस्यापि; K लभेतैव तु वेतनम्. The मनुस्मृति reads तल्लभेतैव; अपरार्क reads स लभेतैव.

4 C भृतकश्च पूर्णे.

5 D, E स्त्रीस्वामी चेत्.

6 D, E omit दद्यात्पणशतम्.

7 G, K राजन्यन्यत्र for राज्ञेन्यत्र.

8 अपरार्क reads द्विर्मोहनाशितं for द्विर्द्रोह०. D, E नाशितः for नाशितम्.

9 B, C, H, K जलेन वा; D, E जलं न वा.

द्रोहो द्वेषः । ऊढमपहृतम् । याज्ञवल्क्यः ( २. १९७–१९८ )

प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ।
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ॥

वृद्धमनुः

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
अथ[1] तस्यापि देयं स्याद्भृतेरर्धं लभेत सः ॥

कात्यायनः

यथा[2] च पथि तद्भाण्डमासिध्येत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतो भृतिम् ॥
त्यजेत्पथ्य[3]सहायं यः श्रान्तं रोगार्तमेव वा ।
प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥

आसिध्येत राजाज्ञयावरुध्येत । बृहस्पतिः

प्रभुणा विनियुक्तः सन् भृतको विदधाति यः ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥
[4]कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृतेः ।
राज्ञा दापयितव्यः स्याद्वेतनं[5] चानुरूपतः ॥ इति ।

नारदः ( ९.७ )

अनयन् भाटयित्वा तु भाण्डं च[6] यानवाहने ।
दाप्यो भृतिचतुर्भागं सर्वामर्धपथे त्यजन् ॥

1 वि. र. reads अगतस्यापि for अथ तस्यापि.
2 अपरार्क, स्मृतिच०, वीर० read यदा च पथि for यथा च.
3 G पथि सहायं सः.
4 B, C, D, E भृते for कृते.
5 अपरार्क, स्मृतिच०, परा. मा. read विनयं चानुरूपतः.
6 B, C, D, E, H, K भाण्डं वा. नारदस्मृति, अपरार्क, स्मृतिच०, परा. मा., वि. र., वीर० read भाण्डवान्यान०.

यानं[1] रथादि । वाहनं साक्षादश्वादि ॥ कात्यायनः

हस्त्यश्वगोखरोष्ट्रादीन्गृहीत्वा भाटकेन यः ।
नार्पयेत्कृतकृत्यः संस्तावद्दाप्यः सभाटकम् ॥

नारदः ( ९. २०–२१ )

पर[2]भूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥
स्तोमा[3]द्विना वसित्वा तु परभूमावनिश्चितः[4] ।
यान्येव तृणकाष्ठानि त्विष्टका[5] विनिवेशिताः ॥
विनिर्गच्छंस्तु तत्सर्वं भूमिस्वामिनि[6] वेदयेत् ॥

[7]स्तोमो भाटकम् ॥

॥ इति वेतनादानम्[8] ॥ १५ ॥

## ॥ अथ संविद्व्यतिक्रमः ॥ १६ ॥

नारदः ( १३. १ )

पाखण्डिनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

1 G, K omit यानं रथादि...श्वादि; H omits वाहनं...श्वादि.
2 नारदस्मृति reads पराजिरे for परभूमौ.
3 M स्तोमादिना. अपरार्क also reads स्तोमादिना.
4 नारदस्मृति reads अनिच्छतः for अनिश्चितः. So does वि. चि.
5 D, E त्विष्टिका for त्विष्टका.
6 B, D, E स्वामिने विनिवेदयेत्.
7 B, D, E स्तोमं भाटकम्.
8 B, C, D, E, G, H, K omit इति वेतनादानम्.

पाखण्डिनः[1] वेदमार्गविरोधिनो[2] वाणिज्यादिकराः[3] । नैगमास्तदविरोधिनः । आदिपदेन त्रैविद्या गृह्यन्ते । तत्र राजकृत्यमाह बृहस्पतिः

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥
अनाच्छेद्यकरास्तेभ्यः प्रदद्याद्गृहभूमयः ।
मुक्तभाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥

अनाच्छेद्योग्राह्यः करो याभ्यस्ता अनाच्छेद्यकराः । मुक्तभाव्याः मुक्तं उत्सृष्टं भाव्यं भूम्यादिफलं यासां ता इत्यर्थः । तेषां च श्रोत्रियादीनां धर्ममाह[4] याज्ञवल्क्यः ( २. १८६ )

निजधर्माविरोधेन[5] यस्तु सामयिको भवेत् ।
सोपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

नारदः ( १३. २ )

पाखण्डिनैगम[6]श्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदेषु च ॥

नानाजातीयानामेकजातीयं कर्म कुर्वतां संघाताः[7] श्रेणयः । तेषामेव भिन्नजातीयं कर्म कुर्वतां संघाः पूगाः । व्राताः ज्ञातिसंबन्धिबन्धूनां संघाताः । ते[8] एव कुलानीत्यप्युच्यन्ते । पाखण्डिनो[9] नैगमाश्च

1 B, C, D, E, H, K पाषण्डाः; G पाखण्डाः.
2 D, E पाषण्डवेदमार्ग०. H वेदविरोधिनः.
3 G वाणिज्यातिकराः; K वाणिज्यनिकराः.
4 C, H, K धर्मानाह.
5 A, D, E धर्मविरोधेन.
6 B, C, G पाखण्ड; D, E, H, K पाषण्ड.
7 B, D, E संघाताः पूगाः.
8 B, D, E एत एव.
9 B, D, E, H पाषण्डिनः.

व्याख्याताः । एतेषां पाखण्ड्यादीनां[1] व्रातान्तानां[2] संघाः गणाः । एतेषां समयभेदे दण्डमाह याज्ञवल्क्यः ( २. १८७ )

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं[3] कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥ इति ।

## ॥ इति संविद्व्यतिक्रमः ॥ १६ ॥

## ॥ अथ क्रीतानुशयः ॥ १७ ॥

नारदः ( १२. १ )

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥

पण्यपरीक्षावधिमाह स एव ( नारद १२. ५–६ )

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥
द्विपदामर्धमासं[4] च पुंसां तद्द्विगुणं स्त्रियाः ।
दशाहं सर्वबीजानामेकाहं लोहवाससाम् ॥

कात्यायनः

भूमेर्दशाहेनुशयः क्रेतुर्विक्रेतुरेव वा ॥

बृहस्पतिः ।

अतोर्वाक् पण्यदोषस्तु यदि संजायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत्क्रेता मूल्यमवाप्नुयात् ॥

1 C, D, E, H पाषण्ड्यादीनाम्.
2 B, D, E व्राता संघा गणाः; G व्रातानाम्.
3 G, K omit सर्वस्व...नारदः.
4 B, C, E, H ०मासं तु; G, K ०मासे तु.

कात्यायनः

अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेन्यथा न तु ॥

स्वपरीक्षया[1] गृहीते तु नारदः ( १२. २–३ )

क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी[2] ।
विक्रेतुः प्रतिदेयं[3] तत्तस्मिन्नेवाह्न्यवीक्षितम्[4] ॥
द्वितीयेह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत्[5] ।
द्विगुणं तत्तृतीयेह्नि परतः क्रेतुरेव[6] तत् ॥

नारदः ( १२. ७ )

परिभुक्तं तु यद्वासः कृष्णरूपं[7] मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥

## ॥ इति क्रीतानुशयः ॥ १७ ॥

## ॥ अथ विक्रीयासंप्रदानम्[8] ॥ १८ ॥

नारदः

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न[9] प्रदीयते ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥

---

1 D, E omit स्वपरीक्षया गृहीते तु.

2 D, E क्रयं for क्रयी.

3 C, H प्रतिदेयं तु.

4 A, B, C, D, E अह्नि वीक्षितम्. मिता०, स्मृतिच०, वीर० read अविक्षतं for अवीक्षितम्.

5 नारदस्मृति, वि. चि. and वीर० read आहरेत्; वि. र. reads आप्नुयात्.

6 G क्रेतुरेव तु.

7 नारदस्मृति reads क्लिष्टरूपम्.

8 D, E अथ विक्रयासंप्रदानम्.

9 A, B, D, E, H, K क्रेतुर्यत्तन्न दीयते.

याज्ञवल्क्यः ( २. २५४ )

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योसौ दिग्लाभं च दिगागते ॥

दिक्[1] देशान्तरम् । तल्लाभो देशान्तरीयपण्यलाभः । सोदयं[2] सलाभम् ॥

स एव ( याज्ञवल्क्य २. २५६ )

राजदैवोपघातेन [3]पण्ये दोषमुपागते ।
हानिर्विक्रेतुरेवासौ [4]याचितस्याप्रयच्छतः ॥

स[5] एव ( याज्ञवल्क्य २. २५५ )

हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥

नारदः ( ११.९ )

दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥

याज्ञवल्क्यः

मत्तोन्मत्तेन विक्रीतं ही[7]नमूल्येन येन वा ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्भवेत्[6] ॥

अयं च[8] सर्वो विधिर्मूल्ये दत्ते तुभ्यमेव देयं नान्यस्[9]येति विक्रेत्रा समये कृते बोध्यः

---

1 A omits दिक् देशान्तरम्.

2 A, B, C, D, E, H omit सोदयं सलाभम्; K reads सोदयं सलाभं before दिक्.

3 A पण्ये दोष उपागते; B, D, E, G, K पण्यदोष उपा०; C पण्यं दोष उपा०.

4 E पातितस्य for याचितस्य.

5 H omits स एव.

6 E omits याज्ञवल्क्यः...पुनर्भवेत्.

7 C हीनं मूल्येन. स्मृतिच०, परा. मा., वीर० read हीनमूल्यं भयेन वा.

8 C अयं स च सर्वोपि; B, D, K सर्वोपि विधिः.

9 C, K नान्यसा ( K नान्यस्य ) इति क्रेत्रा.

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥ इति

नारदोक्तेः ( ११.१० ) ॥ सदोषपण्यविक्रये याज्ञवल्क्यः

ज्ञात्वा सदोषं यः पण्यं वि[1]क्रीणाति विचक्षणः ।
तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा ॥

## ॥ इति विक्रीयासंप्रदानम् ॥ १८ ॥

## ॥ अथ स्वामि[2]पालविवादः ॥ १९ ॥

पालदोषेण[3] पश्वादिनाशे याज्ञवल्क्यः ( २. १६५ )

पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः स्वामिने द्रव्यमेव च ।

द्रव्यं गवादि ॥ पश्वादिमरणनिश्चायकमाह मनुः ( ८. २३४ )

कर्णौ चर्म च वालांश्च [4]बस्तिस्नायु च रोचनाम् ।
पशुस्वामिषु दद्यात्तु मृतेष्वङ्काभि[5]दर्शने ॥

अङ्कः शृङ्गादीति मदनः ॥ गवादिप्रचारार्थभू[6]भागमाह याज्ञवल्क्यः ( २. १६७ )

---

1 A, B, C, D, F, G, K, M read विक्रीणीतावि०; स्मृतिच०, परा. मा. and वीर० read विक्रीणीते विचक्षणः.

2 E omits several pages after स्वामिपालवि.

3 B ०दोषेण नाशे तु.

4 The मनुस्मृति reads बस्तिं स्नायुं च रोचनाम्। पशुषु स्वामिनां दद्यान्मृतेष्वङ्कानि दर्शयेत्. C, D रोचनम्.

5 C, D ०दर्शनम्; F ०ष्वङ्कनिदर्शनम्.

6 B, D, E भूमिभाग०; C, H, K प्रचारार्थं भू०.

धनुःशतं परीणाहो[1] ग्रामाद्ग्रामान्तरं[2] भवेत् ।
द्वे शते खर्वटस्य स्यान्नगरस्य[3] चतुःशतम् ॥

परीणाहो गवादिप्रचारार्था भूः । अयमेव परीहारः धनुःशतं परीहारो[4] ग्रामस्य स्यात्समन्ततः—इति मनूक्तेः ( ८.२३७ ) । अनेककारुकृषीवलयुक्तो ग्रामः खर्वटः । बहुकण्टकसंतान[5] इति केचित् ॥ परसस्यादिभक्षणे[6] पशुस्वामिनो दण्डमाह याज्ञवल्क्यः ( २. १५९–१६१ )

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम्[7] ॥
भक्षयित्वोपविष्टानां[8] यथोक्ताद्द्विगुणो दमः ।
सममेषां विवीतेपि[9] खरोष्ट्रं महिषीसमम् ॥
यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः फलम् ।
गोपस्ताड्यस्तु[10] गोमी तु पूर्वोक्तं दण्डमर्हति ॥

1 C, D धनुःशतपरीणाहः ( D परि० ). A परिणाहो.

2 याज्ञवल्क्यस्मृति reads ग्रामक्षेत्रान्तरम्.

3 K प्रचारस्य for नगरस्य.

4 A परिहारः.

5 C, H बहुकटक०.

6 B, D, F ०भक्षणे स्वामिनो दण्ड०.

7 D अजादिकम्.

8 D भक्षयित्वोपनिविष्टानाम्.

9 C विनीतेपि.

10 B, D read गोपस्ताड्यस्तु गोपं कर्म ( D ०ड्यस्तु यं कर्म ) करिष्यतीति कर्माकुर्वाणाय दत्तं and then follow passages from दत्ताप्रदानिकनिर्णय to the end of that section, then the words अथाभ्युपेत्यशुश्रूषा and passages from that section to सान्वया तु सा and then we have गोमी तु पूर्वोक्तम्.

विवीतं तृणकाष्ठादिसंचयस्थलम् ॥ एतदपवदत्युशनाः

अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ।

व्यासः

आक्रम्य च द्विजैर्भुक्तं परिक्षीणैश्च बान्धवैः ।
गोभिश्च नरशार्दूल वाजपेयाद्विशिष्यते ॥

उशनाः

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकसः ॥

## ॥ इति स्वामिपालविवादः ॥ १९ ॥

## ॥ अथ[1] सीमाविवादः ॥ २० ॥

सीमाज्ञानोपायानाह बृहस्पतिः

करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः ।
सिकतेष्टकगोवालकार्पासास्थीनि भस्म च ॥
प्रक्षि[2]प्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ॥

अत्र साक्षिणां विशेषमाह याज्ञवल्क्यः ( २.१५२ )

सामन्ता वा समग्रामा[3]श्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥

नारदः ( १४. ९ )

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ॥
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥

1 B, D, F, G सीमावादः.

2 C, H प्रक्षिप्यं ( H ०क्षिप्य ) गन्धेष्वेतानि; D, F कुम्भे ह्येतानि.

3 B समग्रामांश्चत्वारो. अपरार्क reads समा ग्रामाः.

बृहस्पतिः

ज्ञातृ[1]चिह्नैर्विना साधुरेकोप्युभयसंमतः ॥
रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥
सत्यव्रतः सोपवासः सीमानं दर्शयेन्नरः ॥

कात्यायनः

सीमा[2]चङ्क्रमणे कोशे पादस्पर्शे तथैव च ॥
त्रिपक्षपक्ष[3]संप्राह्ं दैवराजिकमिष्यते ॥

मनुः ( ८. २५७ )

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ॥
विपरीतं नयन्तै[4]स्तु दाप्यास्तु द्विशतं दमम् ॥

नारदः ( १४. ७ )

अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये ।
सर्वे पृथक् पृथग् दण्ड्या राज्ञा मध्यमसाह[5]सम् ॥

कात्यायनः

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥

याज्ञवल्क्यः ( २. १५३ )

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता[6] ॥

---

1 G, F ज्ञातन्चिह्नैः; K ज्ञातिन्चिह्नैः.
2 F omits सीमाचङ्क्रमणे...स्तथार्धपञ्चा० ( p. 228 l. 3 ).
3 B, C, D ०सप्राह्न दैव०.
4 B, D नयन्तस्ते दाप्या०.
5 D मध्यमसाहसः.
6 D प्रवर्तिताः.

मनुः ( ८. २६५ )

सी[1]मायामविषह्यायां स्वयं राजा च धर्मवित् ।
प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥

स एव

निवेशकालादारभ्य गृहद्[2]वारापणादिकम् ।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥

कात्यायनोपि

मे[3]खलाभ्रमनिष्कासगवाक्षान्नो[4]परोधयेत् ।
प्रणालीं गृहवा[5]स्तुं च पीडयन् दण्डभाग्भवेत् ॥

मेखला भित्तिमूलबन्धः । भ्रमो जलनिर्गमः निष्कासो हर्म्यादिविनिर्गतकाष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थलमिति मदनः । धूमनिष्कास इति क्वचित्पाठः धूमनिर्गमार्थं गवाक्षादि इति तदर्थः । आदिपदेन परभित्त्यादि ॥ स एव

निवेशसमयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मसु ॥

बृहस्पतिः

वर्चःस्थानं वह्निचयं गर्तोच्छिष्टाम्बुसे[6]चनम् ।
अत्यारात्परकुड्यस्य न कर्तव्यं कथंचन ॥

---

1 A सीमायामविसह्यानाम्.
2 अपरार्क, स्मृतिच०, वि. र., वि. चि., परा. मा. read गृहवार्यापणादिकम्.
3 G मेखलाधूमनिःकास०.
4 अपरार्क, वि. र. read ०न्नोपधारयेत्.
5 B, D प्रणाली गृहवास्तु च.
6 G, K ०सेवनं for ०सेचनम्.

वर्चस्स्थानं [1]शौचस्थानम् । अत्यारादतिसमीपे ॥ कात्यायनः

विण्मूत्रो[2]दकसेकं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

बृहस्पतिः

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

नारदः ( १४. १५ )

अवस्करस्थलश्वभ्रभ्रमस्यन्द[3]निकादिभिः ।
चतुष्पथसुरस्थानराज[4]मार्गान्न रोधयेत् ॥

कात्यायनः

सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः ।
अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥

बृहस्पतिः

[5]यस्तत्र संकरं श्वभ्रं वृक्षारोपणमे[6]व च ।
कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥

मनुः ( ९. २८२ )

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥

1 C, G, K शौचस्थलं for शौचस्थानम्.

2 B, D ०सेचं च. अपरार्क, वि. र., परा. मा. read ०दकचक्रं च.

3 B, C, D, G, H, K स्यन्दिनिकादिभिः.

4 G राजभागान्न.

5 C omits यस्तत्र...माषकः.

6 G, H, K ०रोपणमेव वा.

कात्यायनः

तडागोद्यानतीर्थानि योमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥

याज्ञवल्क्यः ( २. १५५ )

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥

मनुः ( ८. २६४ )

गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः ॥

कात्यायनः

सीमामध्ये तु जातानां वृक्षाणां[1] क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् ॥

कात्यायनः[2]

अन्यक्षेत्रे तु जातानां शाखा[3] यत्रान्यसंस्थिताः ।
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिताः ॥

याज्ञवल्क्यः ( २. १५७ )

स्वामिने योनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥

1 B, D omit वृक्षाणां क्षेत्रयो...तु जातानाम् ( l. 14 ).

2 C, G, K read स एव for कात्यायनः.

3 वि. र. reads शाखा यान्यत्र संस्थिता. स्मृतिच० reads यस्य क्षेत्रे तु संश्रिताः; परा. मा. 'यस्य क्षेत्रे तु संस्थिता'; वीर० 'यस्य क्षेत्रस्य संश्रिताः'; वि. र. 'यस्य क्षेत्रेषु संस्थिता'.

स एव ( याज्ञवल्क्य २. १५६ )

न निषेध्योल्पबाधस्तु[1] सेतुः कल्याणकारकः ।
परभूमिं हरन्[2] कूपः स्वल्पक्षेत्रो[3] बहूदकः ॥

न निषेध्य इत्यनुषङ्गः । नारदोपि ( १४. १७ )

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोल्पदोषश्चेद्[4] वृद्धिरिष्टा क्षये सति ॥

नारदः ( १४. २० )

पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं[5] तु यः ।
सेतुं प्रवर्तयेद्यस्तु न स तत्फलभाग्भवेत् ॥

व्यासः

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् ।
स्वामिने स शदं[6] दाप्यो राज्ञे दण्डं च तत्समम् ॥

शदं क्षेत्रोत्पत्त्यर्हफलम्[7] ॥

## ॥ इति सीमाविवादः[8] ॥ २० ॥

---

1 B, D ०ल्पबाध्यस्तु; C ०बालस्तु.
2 A, B, C, D, E, F, G, M read हरेत् for हरन्.
3 B, C, D, G, H, K स्वल्पक्षेत्रे.
4 नारद reads ०ल्पबाधश्च वृद्धि०.
5 A स्वामिने तु यः.
6 G, K सदं for शदम्.
7 B, C ०र्ह फलम्.
8 B, C, G, K सीमावादः

## ॥ अथ वाक्पारुष्यम् ॥ २१ ॥

बृहस्पतिः

देशग्राम[1]कुलादीनां क्षेप[2]ः पापे नियोजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृ[3]संबन्ध उपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रम[4]र्माभिघट्टनम् ॥ इति ।

द्रव्यं विना द्रव्यवैशिष्ट्यं विना केवलं वाक्कृतमेवेत्यर्थः । [5]अभिघट्टनमुद्घाटनम् । विष्णुः ( विष्णुध. सू. ५. ३५ )—समवर्णाक्रोशने द्वादश पणान्दण्ड्यः । स्मृत्यन्तरे

पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न दृश्येत विनयः स्यात्समस्तयोः ॥

नारदः ( १८. ९ )

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोप्यसत्कारी पूर्वे[6] तु विनयो गुरुः ।

मनुः ( ८. २६७ )

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योध्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥

---

1 अपरार्क reads देशधर्म० for देशग्राम० and अपरार्क and परा. मा. 'पापेन योजनम्'. G पापेन योजनम्.

2 G क्षेपं for क्षेपः; H, K क्षेत्रम्.

3 अपरार्क reads ०मातृसंबद्धम्.

4 अपरार्क reads ०मर्मातिपातनम्; परा. मा. and वि. र. read तीव्रं मर्मा०.

5 H omits अभि...टनम्.

6 D पूर्वं तु विनयो.

बृहस्पतिः

विप्रे शतार्धं[1] दण्डस्तु क्षत्रियस्याभिशंसने ।
विशस्तथार्ध[2]पञ्चाशच्छूद्रस्यार्धत्रयोदश ॥

शूद्रविषये स एव

धर्मोपदेशकर्ता च वेदोदाहरणान्वितः ।
आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते ॥

मनुः[3] ( ८. २७५ )

मातरं पितरं जायां भ्रातरं[4] श्वशुरं गुरुम् ।
आक्षारयञ्छतं[5] दाप्यः पन्थानं चाददद्गुरोः ॥

भ्राता ज्येष्ठः पित्रादिसाहचर्यात् । मात्रादीनां सापराधत्वे जायायाश्च[6] निरपराधत्वे दण्ड इति मिताक्षरादिषु ॥ याज्ञवल्क्यः ( २. २०८-२०९ )

बाहुग्रीवानेत्रसक्थिविनाशे[7] वाचिके दमः ।
शत्यस्तदर्धिकः पादनासा[8]कर्णकरादिषु ॥

अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश ।
तथाशक्तः[9] प्रतिभुवं दाप्यः[10] क्षेमाय तस्य तु ॥

1 B, C शतार्धदण्ड.
2 B, D विशस्तदर्धं पञ्चा०.
3 D omits मनुः.
4 मनु० reads भ्रातरं तनयं गुरुम्.
5 F, H अक्षारयन्.
6 H omits जायाया...धत्वे.
7 B, D, F विनाशो वाचिके.
8 B, D, F पादनासकर्ण.
9 C यथाशक्तः for तथाशक्तः.
10 B, D, F दाप्यः योगक्षेमाय ( D दाप्ययोग० ).

स एव ( याज्ञवल्क्य २. २०५,२११ )

अभिगन्तास्मि भगिनीं मातरं वा तवेति च ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम्[1] ॥
त्रैविद्यनृपदेवानां दण्ड[2] उत्तमसाहसः ।

नारदः ( १८. २१ )

पतितं पतितेत्युक्त्वा [3]चौरं चौरेति वा पुनः ।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां[4] व्रजेत् ॥

याज्ञवल्क्यः ( २. २०४ )

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्ध[5]त्रयोदश ॥

उशनाः

मोहात्प्रमादात्संघर्षात्प्रीत्या वोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत् ॥

## ॥ इति वाक्पारुष्यम् ॥ २१ ॥

## ॥ अथ दण्डपारुष्यम् ॥ २२ ॥

नारदः ( १८. ४ )

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मा[6]दिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥

---

1 G, K read स एव after दमम्.
2 The याज्ञवल्क्यस्मृति reads क्षेपः for दण्डः.
3 B, D, F चोरं for चौरं; C, K चोरं चोरेति.
4 D, F, G, H द्विदोषताम्.
5 B, C, D, F, G ०त्रयोदशान् ( D अर्ध त्रयोदशात् ).
6 नारद० reads भस्मादीमाशुपक्षेपैः.

**बृहस्पतिः**

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन्[1] ।
हत्वापराधिनं चैव नापराधी भवेन्नरः[2] ॥ इति ।

**कात्यायनः**

कर्णघ्राणपदाक्षीणि जिह्वाशिश्नकरस्य[3] च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥

**याज्ञवल्क्यः ( २. २१३–२१४ )**

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः[4] स्मृतः ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो[5] मोहमदादिभिरदण्डनम् ॥

पार्ष्णिः[6] पादपश्चाद्भागः ॥ कात्यायनः

छर्दिमूत्रपुरीषाद्यै[7]रापाद्यः स चतुर्गुणः ।
षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुणः स्मृतः ॥

**याज्ञवल्क्यः ( २. २१६ )**

उद्गूर्णे[8] हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे[9] मध्यमसाहसः ॥

---

1 D, F प्रतिताडयेत्.
2 K, N भवेत्तु सः for भवेन्नरः and omit कात्यायनः...भृगुः.
3 B, C, D ०शिश्नं करस्य च. अपरार्क and स्मृतिच० read कर्णोष्ठघ्राणपादाक्षि०.
4 H द्विगुणो दमः.
5 B, C, D, F, H हीनेष्वर्धो दमो.
6 C, G, K, N omit पार्ष्णि...द्भागः.
7 परा. मा. reads ०पुरीषाद्यैः पादादौ च; वीर० '०पुरीषाद्यैः स्पर्शने सः'.
8 D उद्गूर्णो.
9 B, C, D, F शास्त्रे for शस्त्रे; G शास्त्रमध्ये मध्यम०.

स एव ( याज्ञवल्क्य २. २१७–२१८ )

पादकेशांशुककरोल्लुञ्चनेषु पणान्दश ।
पीडाकर्षांशुका[1]वेष्टपादाध्यासे शतं दमः ॥
शोणितेन[2] समं दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं[3] पणान्दण्ड्यो द्विगुणो दर्शनेऽसृजः ॥

पीडेत्यादि । अंशुकेनावेष्ट्य दृढमाकृष्य पादेनाध्यासे शतमित्यर्थः ॥

स एव ( याज्ञवल्क्य २. २१९, २१५ )

करपाददतो भङ्गे भेदने[4] कर्णनासयोः ।
मध्यो[5] दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥
विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे[6] तु तदर्धिकः ॥

मनुः ( ८. २७९–२८० )

येन केनचिदङ्गेन हिंस्या[7]च्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिं[8]मुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।

कात्यायनः

वाक्पारुष्ये यथैवोक्ताः प्रातिलोम्यानुलोमतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥

1 B, C, H ॰शुकविष्टपादा॰; D, F ॰शुकाविष्टां पादा॰.

2 The मिता॰ and अपरार्क read शोणितेन विना, while अपरार्क reads पीडां for दुःखम्. K दण्डं for दुःखम्.

3 D, F द्वाविंशतम्.

4 K छेदने for भेदने.

5 B मध्ये दण्डो.

6 B, C, D, F, H संशये तु for संस्पर्शे तु.

7 The printed मनुस्मृति reads हिंस्याचेच्छ्रेष्ठमन्त्यजः; but the मिता॰, अपरार्क, वि. र., वीर॰ and other works read as in the text.

8 C, H पाणिमुद्दिश्य. B, D, F दण्डे वा for दण्डं वा.

विष्णुः ( विष्णुध. सू. ५. ७३ )—एकं बहूनां निघ्नतां प्रत्येकश उक्तो दण्डो द्विगुणः ॥ कात्यायनः

देहेन्द्रियविनाशे तु यथा दण्डं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं[1] समुत्थानं च पण्डितैः ॥

तुष्टिकरं ताडिततोषकरम् । समुत्थानमौषधादिमूल्यं च पण्डितैरभिज्ञैः कल्पितं देयमित्यर्थः ॥ पशुताडनादौ याज्ञवल्क्यः ( २. २२५–२२६ )

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु द्विपण[2]प्रभृतिः क्रमात् ॥
लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशुषु चैतेषु स्थानेषु द्विगुणो दमः ॥

वृक्षोपघाते मनुः ( ८. २८५ )

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥

## ॥ इति दण्डपारुष्यम् ॥ २२ ॥

## ॥ अथ स्तेयम् ॥ २३ ॥

तदुपयोगितया त्रिविधं द्रव्यमाह नारदः ( १७. १४–१६ )

मृद्भाण्डासनखट्वास्थि[3]दारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रद्रव्यमुदाहृतम् ॥
वासः कौशेयवर्जं च गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवादि च ॥

1 C omits देयं...तुष्टिकरम् ( l. 5 ).
2 B, C, D, F, K द्विगुणः प्रभृतिक्रमात् ( C प्रभृतिः क्रमात् ).
3 B, D, F खड्गादिस्थदारु०; C, K खड्गादिस्थि०. अपरार्क reads खड्गादि-चारुचर्म०; परा. मा. reads तन्तुचर्म०. H ०यवादिकम् for तृणादि यत्.

हिरण्यरत्नकौशेयं[1] स्त्रीपुंगोगजवाजिनः[2] ।
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ॥

तत्र प्रकाशतस्करांस्तावदाह स एव

नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः ।
दैवोत्पातकराः[3] क्षुद्राः शिल्पज्ञाः प्रतिरूपकाः ॥
अक्रियाकारिणश्चैव मध्यस्थाः[4] कूटसाक्षिणः ।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः ॥

स्मृत्यन्तरेपि[5] ( नारदपरिशिष्ट २—३ )

प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः ।
उत्कोचकाः सोपधिका वञ्चकाः[6] पापयोषितः ॥
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि ॥

बृहस्पतिः

प्रच्छाद्य दोषं व्यामिश्र्य पुनः संस्कृत्य[7] विक्रयी ।
पण्यं तद्द्विगुणं दाप्यो वणिग्दण्डं[8] च तत्समम् ॥

1 B, C, D, H, K हिरण्यं रत्न०. K puts the verse हिरण्यरत्न... मुत्तमम् immediately after ०तृणादि यत्.

2 B, C, F, H ०पुंगौर्गज०.

3 A, B, C, D, F, H दैवोत्पादकराः ( H ०कृतः ); K दैवोत्पातविदो मैन्द्राः. स्मृतिच०, वि. र., परा. मा. and वीर० read ०त्पातविदो भद्राः.

4 B, D, F मध्यमाः for मध्यस्थाः. F मूढसाक्षिणः.

5 N reads नारदोपि for स्मृत्यन्तरेपि.

6 वि. र., स्मृतिच०, परा. मा. read कितवाः for वञ्चकाः and पण्ययोषितः for पापयोषितः. वीर० reads परयोषितः.

7 H पुनःसंस्कार०.

8 B, C, D, F, H वणिग्दत्वा च; K वणिग्दत्तं च.

अज्ञातौषधिमन्त्रस्तु[1] यस्तु व्याधेरतत्त्ववित् ।
रोगिभ्योर्थं समादत्ते स दण्ड्यश्चौरवद्भिषक् ॥

कूटाक्षदेविनः क्षुद्रा राजभाव्यहराश्च[2] ये ।
गणका[3] वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥

ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तथा नृणाम् ।
शकुनादि[4] च ये ब्रूयुर्विनेयास्ते प्रयत्नतः ॥

दण्डाजिनादिभिर्युक्तमात्मानं[5] दर्शयन्ति ये ।
हिंसन्ति च्छद्मना नृणां वध्यास्ते राजपूरुषैः ॥

स्वल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
ये चाज्ञकान्वञ्चयन्ति[6] दण्ड्यास्तेर्थानुसारतः ॥

हेमरत्नप्रवालाद्यान्[7] कृत्रिमान् कुर्वते तु ये ।
क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञे च द्विगुणं[8] दमम् ॥

मध्यस्था वञ्चकाः स्युश्चेद्रागलोभादिना यदा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम् ॥

---

1 अपरार्क (on II. 242) reads 'अजानन्नौषधं तन्त्रं यश्च व्याधेरतन्त्र०'.

2 B, H राज्यभाव्य०; D, F राज्याभाव्य०. वि. र. reads राजद्रव्यहराश्च.

3 D गुणका for गणका.

4 परा. मा., वि. र. and वीर० read श्रावयन्त्यर्थलोभेन विनेया०.

5 B, C, D, F, H वस्त्रालंकरणैर्युक्त० for दण्डाजिनादिभिर्युक्त०.

6 अपरार्क, वि. र., वीर०, परा. मा. read स्त्रीबालकान्वञ्चयन्ति.

7 अपरार्क and वि. र. read हेममुक्ताप्रवालाद्यम्.

8 C द्विगुणं समम्; K राज्ञा तद्द्विगुणं दमम्.

व्यासः

साधनाद्यन्विता रात्रौ[1] यदि प्रच्छन्नचारिणः ।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥

स एव

उत्क्षेपकः सन्धिभेत्ता पान्थमुड्ग्रन्थिमोचकः ।
स्त्रीपुंगोश्वपशुस्तेयी चौरो नवविधः स्मृतः ॥

सन्धिर्भित्त्यादेः ॥ याज्ञवल्क्यः ( २. २७४ )

उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकौ ।
कार्यौ द्वितीयापराधे करपाद[2]विहीनकौ ॥

संदंशस्तर्जन्यङ्गुष्ठौ ॥ मनुः[3] ( ९. २७६ )

सन्धिं भित्त्वा[4] तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले[5] निवेशयेत् ॥

बृहस्पतिः

तथा पान्थमुषो वृक्षे गले बद्ध्वावलम्बयेत् ॥
अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ ( मनु ९. २७७ )

अङ्गुली तर्जन्यङ्गुष्ठौ[6] ॥ द्रव्यं गृहीत्वा चौरपलायने विशेषमाह[7] नारदः ( नारदपरिशिष्ट १६–१७ )

---

1 स्मृतिच०, परा. मा., वीर० read रात्रौ विचरन्त्यविभाविताः; and परा. मा. and वीर० read साधनाङ्गान्विता.

2 K करपादैकहीनकौ. मिता० and अपरार्क read करपादैकहीनकौ.

3 B, C, D, F, H omit मनुः.

4 B, C, D, F, H छित्त्वा for भित्त्वा.

5 F तीक्ष्णमूले; H तीक्ष्णसूत्रे.

6 K after तर्जन्यङ्गुष्ठौ adds प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वधः and omits the words द्रव्यं गृहीत्वा...स्त्रीहरणे.

7 D, F विशेषमाह याज्ञवल्क्यः.

गोचरे यस्य मुष्येत तेन चौरः[1] प्रयत्नतः ।
ग्राह्यो दाप्योथवा द्रव्यं पदं यदि न निर्गतम् ॥
निर्गते[2] पुनरेतस्मान्न चेदन्यत्र पातितम्[3] ।
सामन्तान्[4]मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥

याज्ञवल्क्योपि ( २. २७२ )

स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति ।
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथवा पुनः ॥ इति ।

स्त्रीहरणे व्यासः

स्त्रीहर्ता लोहशयने दग्धव्यो वै कटाग्निना ।
नरहर्ता हस्तपादौ छित्वा स्थाप्यश्चतुष्पथे ॥

बृहस्पतिः[5]

गोहर्तुर्नासिकां छित्त्वा बद्ध्वाम्भसि निमज्जयेत् ।

नारदः ( नारदपरिशिष्ट २८ )

सर्वस्वं[6] हरतो नारीं कन्यां तु हरतो वधः ।
वाजिवारणलोहानां चाददीत बृहस्पतिः ॥

सर्वस्वमित्यनुषङ्गः ॥ व्यासः

पशुहर्तुस्त्वर्धपादं तीक्ष्णशस्त्रेण कर्तयेत् ॥

1 The printed नारदस्मृति reads चौराः for चौरः and मृग्याः for ग्राह्यः. परा. मा. reads as in the text.

2 D, E, F, निर्गते तु पुन०. नारद० reads निर्गते तु यदा यस्मिन्नष्टेन्यत्र न पातयेत्; परा. मा. 'निर्गतं पुनरेतस्मान्न चेदन्यत्र याति तत्'; वि. र. and अपरार्क read निर्गते तु पदे तस्मान्न.

3 F, H यान्वितं for पातितम्.

4 B, D, F omit सामन्तान्...गच्छति.

5 B, C, D, F, H omit बृहस्पतिः...मज्जयेत्. M reads वधान्तमिति वर्जयेत्. K reads बध्वा तमिति वर्जयेत्; G reads बद्ध्वा तमिति मज्जयेत्.

6 नारद (परिशिष्ट) reads सर्वस्वं स्त्री तु हरता कन्यां तु. वि. र. reads ०वारणबालानाम्.

नारदः ( नारदपरिशिष्ट २९ )

[1]महापशुं स्तेनयतो दण्ड उत्तमसाहसम् ।
मध्यमं मध्यमपशून् पूर्वं क्षुद्रपशून्[2]कृते ॥

मनुः ( ८. ३२० )

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽप्य[3]धिके वधः ।
शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम् ॥

कुम्भो विंशतिप्रस्थः । स [4]एव ( मनु ८. ३२३ )

मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥

नारदः ( नारदपरिशिष्ट २७=मनु ८. ३२१ )

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।
रत्नानां चैव सर्वेषां शतादभ्यधिके वधः ॥

मनुः ( ८. ३२१–३२२ )

सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।
शेषेष्वेकादशगुणं मूल्याद्[5]दण्डं प्रकल्पयेत् ॥

याज्ञवल्क्यः ( २. २७० )

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥

---

1 B, C, D omit नारदः before महापशुम्. K महापशुं स्तेनयोग्यं दण्डमुत्तम०.

2 B, C, D, F, G पशून् हृतः; K ०पशून्हृतः.

3 B, C, D, F, K हरतोभ्यधिके वधः. The printed मनुस्मृति reads हरतोभ्यधिकं वधः.

4 G omits स एव.

5 F मूल्यदण्डः प्रकल्पते; B, C, D मूल्याद्दण्डः प्रकल्प्यते; K मूल्याद्दण्डम्.

मनुः ( ९. २४० )

प्रायश्चित्तं[1] तु कुर्वाणाः पूर्वे[2] वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसम् ॥

याज्ञवल्क्योपि ( २. २७० )

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ॥

नारदः ( नारद १७. १९ )

भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम् ।
शक्ताश्च य उपेक्षन्ते तेपि तद्दोषभागिनः ॥

तद्दण्ड[3]भागिनश्च ॥

## ॥ इति स्तेयम् ॥ २३ ॥

## ॥ अथ साहसम् ॥ २४ ॥

तत्स्वरूपं[4] नारदेनोक्तं ( १७. १ )

सहसा क्रियते कर्म यत्किंचिद्बलदर्पितैः[5] ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥ इति ।

बृहस्पतिः

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥

---

1 B, D, F, K प्रायश्चित्तं च. C प्रायश्चित्तमकुर्वाणाः.

2 F पूर्ववर्णाः. The printed मनुस्मृति reads सर्ववर्णाः,

3 K omits तद्दण्डभागिनश्च.

4 G, K omit तत्स्वरूपं...मिहोच्यते.

5 D, F दर्पितः for दर्पितैः.

उभयं वाक्पारुष्यं दण्डपारुष्यं चेति ॥ नारदः ( १७. ४–६ )

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपोपमर्दाद्यैः[1] प्रथमं साहसं स्मृतम् ॥

वासःपश्वन्नपानानां[2] गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥

व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥

याज्ञवल्क्यः ( २. २७३ )

बन्दिग्राहांस्तथा वाजिकुञ्जराणां[3] च हारिणः ।
प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान्[4] ॥

बृहस्पतिः

प्रकाशघातका[5] ये तु तथा चोपांशुघातकाः ।
ज्ञात्वा सम्यग्धनं हृत्वा[6] हन्तव्या विविधैर्वधैः ॥ इति ।

स एव[7]

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः ।
मर्मप्रहारको यस्तु घातकः[8] स उदाहृतः ॥

---

1 वि. र. reads ०क्षेपापमर्दाद्यैः; स्मृतिच०, परा. मा. 'क्षेपावमर्दाद्यैः'.
2 B, K पश्वन्नयानानां; C पश्वन्नपापानाम्.
3 B, C, D, F, G, K कुञ्जराणां विहारिणः ( D, F विहारिणा ).
4 B, C, D, F, H आरोपयेन्नृपः ( F न्नृप ).
5 D, F प्रकाशपातका. G omits प्रकाश...स एव.
6 D हत्वा for हृत्वा; K दत्वा ( हृत्वा ? ).
7 B, C, D, F, H, K बृहस्पतिः for स एव.
8 B, C, D, F, G, K घातकास्त उदाहृताः. F मर्मप्रहारकारं तु; वि. र. reads मर्मप्रहारदोषस्तु घातकस्य उदाहृतः.

कात्यायनः

आरम्भकृत्सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम्[1] ॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्तकः[2] ।
उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदकः ॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथाशक्त्यनुरूपं तु दण्डमेषां प्रकल्पयेत् ॥

विप्र[3]दण्डे विशेषमाह नारदः ( नारद १७. ९–१० )

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोर्हति ॥
शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन[4] च ॥ इति ।

आतता[5]य्यपि विप्रो न वध्यः । नाततायिवधे दोषोन्यत्र गोब्राह्मणात्–इति सुमन्तूक्तेः । कात्यायनः

आततायिनि चोत्कृष्टे तपःस्वाध्यायसंयुते[6] ।
वधस्तत्र तु नैव स्यात्पापे हीने वधो भृगुः ॥

---

1 C, D, F विकर्मणाम्.

2 अपरार्क, स्मृतिच० read ०नाशप्रदर्शकः and सर्वे तत्कार्यकारिणः. वि. त्रि. 'युक्त्योपदेशकश्चैव'.

3 B, C, D, F, G, H विप्रस्य दण्डे ( C दण्डविशेष० ).

4 H गर्दभेन हि आत०.

5 G omits आततात्य्यपि...कात्यायनः.

6 D, F स्वाध्यायसंयुतम्. स्मृतिच० reads ०स्वाध्यायजन्मतः and so does कुल्लूक on मनु 8. 350.

आततायिन[1] आह स एव

उद्यतासिविषाग्निश्च शापोद्यत[2]करस्तथा ।
आथर्वणेन[3] हन्ता च पिशुनश्चापि राजनि ॥
भार्यातिक्रम[4]कारी च रन्ध्रान्वेषणतत्परः ।
एवमाद्यान्विजानीयात्सर्वानेवाततायिनः ॥

वसिष्ठोपि[5] ( वसिष्ठध. सू. ३. १६ )

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥

यत्तु मनुः ( ८. ३५० )

गुरुं वा बालवृद्धौ[6] वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥ इति

यच्च कात्यायनः ( =वसिष्ठध. सू. ३. १७ )

आततायिनमायान्तमपि वेदान्तपारगम्[7] ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ इति

तदपि शब्दाद्वाशब्दाच्च[8] ब्राह्मणभिन्नाततायिवधपरम् । ब्राह्मणग्रहणं तु कैमुतिक[9]न्यायार्थम् । आततायी ब्राह्मणोपि वध्यः किमुतान्य इति मिताक्षरायां

1 F आततायिनमाह.
2 स्मृतिच० reads चापोद्यतकरस्तथा.
3 F omits आथर्वणेन...०वधार्थमागच्छन् ( p. 242 l. 6 ).
4 D भयनिक्रमकारी.
5 C, H omit वसिष्ठोपि...तायिनः.
6 B, D बालवृद्धं वा for बालवृद्धौ वा.
7 स्मृतिच० and वीर० read वेदान्तगं रणे.
8 B, D शब्दाद्वा दशाब्दाच्च; C शब्दद्वादशाब्दाच्च.
9 G कैमुतिकनयार्थम्.

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥ इति

[1]गौलवोक्तेः

स्वाध्यायिनं कुले जातं[2] यो हन्यादाततायिनम् ।
अहत्वा भ्रूणहा स स्यान्न[3] हत्वा भ्रूणहा भवेत् ॥ इति

बृहस्पत्युक्तेश्च । स्ववधार्थमागच्छन्नाततायिब्राह्मणोपि वध्य एव । क्षेत्रदारादिहरो ब्राह्मणो न वध्यः क्षत्रियादिस्तु तादृशोपि वध्य इति चन्द्रिकाशयः । युक्तश्चायम् । मनुकात्यायनगालवबृहस्पतिवचसां स्ववधोद्यताततायिविशेषविषयतया सामान्यविषययोः पूर्वोक्तसुमन्तु-कात्यायनीय[4]वचसोर्बाधस्योचितत्वात् ॥ यत्तु बृहस्पतिः

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् ।
यो न[5] हन्याद्वधप्राप्तं सोश्वमेधफलं लभेत् ॥ इति

तदपि[6] स्ववधोद्यतभिन्नाततायिपरम् । किं च आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम्—इति कलौ वधोद्यतस्याततायिनो विप्रस्य हननं निषिद्धम् । तस्य[7] विधितोप्राप्ते कलौ निषेधो व्यर्थः[8] स्यात् । सर्वेषामपि कलिनिषेधानां विधिप्राप्तगोचरत्वस्य—इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः—इति धर्मपदस्वरसेन सर्वनिबन्धेषु व्यवस्थापितत्वात् ॥ अतः कलौ स्ववधोद्यतोप्याततायी[9] विप्रो न वध्यः । युगान्तरे तु

1 B, D omit गालवोक्तेः.
2 H कुले जन्म.
3 B, D स्यादहत्वा भ्रूणहा भवेत्.
4 B, C, F, G सुमन्तुकातीयवचसोः; H ०कात्यायनवचसोः.
5 F यो हन्याद्वध०.
6 G तदपि स्ववधोद्यतस्याततायिनो विप्रस्य ( omitting a line ).
7 C, G तस्याविधितो प्राप्तत्वे.
8 F omits व्यर्थः...निषेधा (नां).
9 F आततायिविप्रो.

वध्य एव । अन्यस्त्वाततायिविप्रः सर्वेष्वपि युगेष्ववध्यः क्षत्रियादिस्त्वाततायी सर्वोपि सर्वयुगेषु वध्य इति दिक् ॥ हीनमध्योत्कृष्टद्रव्यहरणे दण्डमाह बृहस्पतिः

क्षेत्रोपकरणं[1] चैव पुष्पमूलफलानि च ।
विनाशयन् हरन्दण्ड्यः शताद्यमनुरूपतः ॥
पशुवस्त्रान्नपानानि गृहोपकरणं तथा ।
हिंसयन् चोरयञ्छास्यो द्विशताद्यं दमं तथा ॥
[2]स्त्रीपुंगोहेमरत्नानि देवविप्रधनं तथा ।
यौषेयं चोत्तमद्रव्यमेषां मूल्यसमो दमः ॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः ।
हर्ता[3] वा घातनीयः स्यात्प्रसङ्ग[4]विनिवृत्तये ॥

[5]यौषेयं स्त्रीधनम् । वाशब्द एवार्थे । अत्र विनाशयन् हर्तेति पद[6]स्वरसात्साहसविषयमेतद्वच इति मदनः ॥ साहसप्रयोजक[7]दण्डमाह याज्ञवल्क्यः ( २. २३१ )

यः साहसं का[8]रयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम् ॥

द्वैगुण्यं[9] चातुर्गुण्यं वा साक्षात्कर्तृदण्डापेक्षया ॥ साध्वीं[10] विप्रां बलाद्गच्छतो दण्डमाह मनुः ( ८. ३७८ )

---

1 वि. र. reads ०करणं सेतुं पुष्पमूल०; स्मृतिच० '०करणं सेतुमूलपुष्पफलानि च'.
2 D, F, H स्त्रीपुंसो हेम०.
3 स्मृतिच० reads हन्ता वा for हर्ता वा.
4 M reads प्रासङ्गविनिवृत्तये for प्रसङ्गविनि०.
5 स्मृतिच० and वि. र. read कौशेयं for यौषेयम्. D, F यौषा स्त्रीधनम्.
6 D, F पक्षः स्वरसात्.
7 B, C, D, F, G, H साहसप्रयोजकस्य.
8 F दाता कारयति स दाप्यो.
9 B, C, G, H द्वैगुण्यचातुर्गुण्ये.
10 B, C, D, F, H omit साध्वीं ( H विप्रां also ).

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां[1] विप्रां बलाद्व्रजन् ॥

तादृश्यां विप्रायां क्षत्रियादेस्तु[2] बृहस्पतिराह

सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिङ्गं वृषणौ भ्रामयेद्गर्दभेन तु ॥

कामयेत्परपत्नीं गच्छेत् ॥ क्षत्रियादीनामनुलोमानां प्रतिलोमानां च बलात्सजातीय[3]भार्यागमने दण्डमाह कात्यायनः

स्त्रीषु कृतोपभोगः[4] स्यात्प्रसह्य पुरुषो यदा ।
वधे तस्य[5] प्रवर्तेत कार्यातिक्रमणं हि तत् ॥

स एव

अनिच्छन्ती[6] तु या भुक्ता गुप्तां तां वासयेद्गृहे ।
मलिनाङ्गीमधःशय्यां पिण्डमात्रोपजीविनीम् ॥

स एव

हीनवर्णोपभुक्ता या त्याज्या वध्याथवा भवेत् ॥

वधस्त्विच्छन्त्यां बोध्यः ॥ हीनमध्यमोत्तमसाहसेषु दण्डमाह नारदः ( १७. ७–८ )

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य[7] च शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥

---

1 B, C, F, H विप्रां गुप्ताम्.

2 B, D, F क्षत्रियाद्यस्तु.

3 B, C, G, H सजातीयपरभार्या०.

4 स्मृतिच० reads वृत्तोपभोगः; वि. र. 'वृत्तोपयोगः'.

5 A वधस्तत्र प्रवर्तेत ; B, C, D, F, G, H वधे तत्र प्रवर्तेत.

6 B, D यो भुक्त्वा ; A, B, D अनिच्छन्नीति.

7 H मध्यदण्डः.

उत्तमे साहसे दण्डः सहस्रावर इष्यते ।
वधः[1] सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥ इति ।

वधच्छेदनाद्युपदेशस्तु[2] राजानं प्रति नान्यस्य तस्यैव दण्डकरणेधिकारात् ॥

## ॥ इति साहसम् ॥ २४ ॥

## ॥ अथ स्त्रीसंग्रहणम् ॥ २५ ॥

बलात्परभार्यागमनस्य साहसत्वात्पूर्वमेव दण्ड उक्तः । छलेन सजातीयपरभार्यागमने त्वाह बृहस्पतिः

छद्मना कामयेद्यस्तु[3] तस्य सर्वहरो दमः ।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥

सर्वहरः सर्वस्वहरः । अयं च दण्डः समायाम् । हीनायामेतदर्धम् । उत्तमायां वधः । तथा च स एव

दमो नेयः[4] समायां यो हीनायामधिकस्ततः ।
पुंसः कार्योधिकायां तु गमने संप्रमापणम् ॥

हीनमध्योत्तमत्रिविधस्त्रीसंग्रहणे दण्डमाह स एव

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिकोपि[5] बलाद्रहः ॥

---

1 F बन्धः for वधः.
2 G omits वधच्छेद...धिकारात्.
3 D, E, F, G कारयेद्यस्तु.
4 B, D, E, F नयः for नेयः; the वि. र. and वि. चि. (p. 117) read दमोन्तिमः समायां तु हीनायामधिकस्ततः. B, D, E, F समायां च.
5 A, B, D, E, F स्यान्मध्यमोपि for स्यादधिकोपि. G अधिको द्रविणाधिके for अधिकोपि बलाद्रहः; अपरार्क, वि. र., वीर० read अधिको द्रविणाधिके.

दुर्वृत्तस्य परस्त्रिया सह संभाषणे दण्डमाह मनुः ( ८. ३५४ )

परस्य पत्न्या पुरुषः संभाषं[1] योजयेत्सह ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥

पित्रादिभिर्निवारितयोः स्त्रीपुंसयोः[2] संभाषणे दण्डमाह याज्ञवल्क्यः ( २. २८५ )

स्त्री[3] निषेधे शतं दण्ड्या द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

प्रत्येकनिषेधविषयं पूर्वमर्धम् । उभयनिषेधे उत्तरम् ॥ उभयोरनुरागकृतसंभोगे[4] दण्डमाह याज्ञवल्क्यः ( २. २८६ )

सजातावुत्तमो दण्ड आनुलोम्ये[5] तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥

कात्यायनः

सर्वेषु चापराधेषु पुंसो योर्थदमः[6] स्मृतः ।
तदर्धं योषितो दद्युर्वधे[7] पुंसोऽङ्गकर्तनम् ॥

व्यभिचरितविप्रागमने[8] तु मनुः ( ८. ३७८ )

शतानि पञ्च दण्ड्यः स्याद्निच्छन्त्या सह संगमे[9] ॥

1 G संभाषे for संभाषम्. The printed मनु reads संभाषां योजयन्रहः; वि. र. reads as in the text ; वीर० 'संलापं योजयेत्.'
2 B, C, D, E, F, H स्त्रीपुंसो for स्त्रीपुंसयोः.
3 E omits स्त्री निषेधे...संभोगे दण्डमाह याज्ञवल्क्यः. A दमः पुमान् for दमं पुमान्; the printed याज्ञ० reads दद्यात् for दण्ड्या.
4 B, C, D, F, H ०रागकृते संभोगे.
5 E अनुलोमे for आनुलोम्ये.
6 F पुंसो योर्थः दमः
7 C, D, F वधो पुंसोङ्ग०.
8 E ०व्यभिचरितास्त्वनुलोमानुगविप्रागमने तु.
9 C, G, H संगतः for संगमे.

इदं सजातीयापरम्[1] । व्यभिचरितास्वनुलोमासु[2] गमने स एव (मनु ८. ३८५)

अगुप्ते वैश्यराजन्ये शूद्रां वा ब्राह्मणो व्रजन्[3] ।
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियम्[4] ॥ इति ।

यत्तु मनुः[5] (८. ३८३)—सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते[6] तु ते व्रजन्—इति तत्साध्वीपरम् ॥ शूद्रस्य प्रातिलोम्येन गमने दण्डमाह मनुः (८. ३७४)

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
अगुप्तं[7] लिङ्गसर्वस्वं गुप्तं[8] सर्वेण हीयते ॥

शूद्रो गुप्तां द्विजां गच्छन् लिङ्गच्छेदनं सर्वस्वहरणं चार्हति गुप्तां तु गच्छन्सर्वस्वहरणं वधं चार्हतीत्यर्थः ॥ गौतमः (गौ. ध. सू. १२. २–३) आचार्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं च गुप्ता चेद्वधोधिकः—इति । मनुः (८. ३७६)

ब्राह्मणीं तु यदा गुप्तां गच्छेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम्[9] ॥

स एव (मनु ८. ३७७)

---

1 C सजातीयपरम्.
2 B, D, E, F ०लोमानुगमने; G ०गमनेपि.
3 H व्रजेत् for व्रजन्. The printed मनु reads अगुप्ते क्षत्रियवैश्ये.
4 B, C, D, E, F, G, H ०स्त्रियामिति for स्त्रियमिति.
5 A, B, C, D, E, F, H omit मनुः after यत्तु.
6 B, C, D, E, F दाप्यो गुप्ते विट्क्षत्रिये व्रजन्; A सहस्रं ब्राह्मणे दण्डो गुप्ते विट्क्षत्रिये व्रजन्.
7 G अगुप्तमङ्गसर्वस्वं; the printed मनु reads अगुप्तमङ्गसर्वस्वैः.
8 E omits गुप्तं सर्वेण...गच्छन्सर्वस्व०. B, C, H गुप्तः सर्वेण; D, F गुप्तसर्वेण.
9 D, E, F सहस्रियं for सहस्रिणम्.

[1]उभावपि हि तावेव ब्राह्मण्या गु[2]प्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥

स एव ( मनु ८. ३८२ )

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥

अगुप्त[3]ब्राह्मणीगमने यो दण्डः स इत्यर्थः ॥ वसिष्ठः ( वसिष्ठध. सू. २१. ३–५ ) राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येदेवं वैश्यो राजन्यायां मैथुनमाचरञ्छूद्रस्तु राजन्यावैश्ययोः–इति ॥ नारदः ( १५. ७३–७५ )

मा[4]ता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते ॥

याज्ञवल्क्योपि ( ३. २३२–२३३ )

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥
आचार्यपत्नीं स्व[5]सुतां गच्छंस्तु गुरुतल्पगः ।
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि ॥

---

1 H omits उभावपि...कटाग्निना.
2 D omits गुप्तया सह...यो ब्राह्मण्या°.
3 B, C, D, E, H अगुप्ताब्राह्मणी°. G omits अगुप्त...इत्यर्थः.
4 B, C, D, E, F एवं मातृसमा श्वश्रूः ( C एकमातृ° ).
5 B, D, E, F तनयां for स्वसुताम्.

अयं च दण्डो न ब्राह्मणस्य

परदाराभिमर्शे तु प्रवृत्तं[1] तु महीपतिः ।
उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥
अब्राह्मणः संग्रहणे प्राणान्तं वधमर्हति ॥ इति

ब्राह्मणाधिकारे बृहस्पतिवचनात् । शङ्खलिखितौ—येन[2] येनाङ्गेनापराधं कुर्यात्तत्तदस्य छेत्तव्यमन्यत्र ब्राह्मणात् ॥ ब्राह्मणस्य[3] दास्यादिगमने दण्डमाह याज्ञवल्क्यः ( २. २९० )

अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम् ॥

अवरुद्धाः स्वामिना पुरुषान्तरं प्रति[4] गन्तुं निषिद्धाः ॥ नारदः ( १५. ७८–७९ )

स्वैरिण्यब्राह्मणी वेश्या[5] दासी निष्कासिनी[6] च या ।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्[7] ॥

अब्राह्मणीति स्वैरिणीविशेषणम् । स्वैरिणी स्वतन्त्रा पुंश्चली । निष्कासिनी कुटुम्बान्निर्गता पुंश्चली ॥ याज्ञवल्क्यः ( २. २९४ )

अन्त्याभिगमने त्वङ्क्यः कुबन्धेन[8] प्रवासयेत् ।
शूद्रस्तथाङ्क्य एव स्यादन्त्यस्यार्यागमे वधः ॥

---

1 B, D, E, F प्रवृत्तं तु स महीपतिः.
2 C omits one येन.
3 D, G ब्राह्मणदास्यादि; E ब्राह्मणं दास्यादि°.
4 G omits प्रति गन्तुं...इति द्यूत° ( p. 252 l. 17 ). C °न्तरं गन्तुं प्रतिषिद्धाः.
5 A वैश्या for वेश्या.
6 F, H निष्कासिता च for निष्कासिनी च.
7 H पारदारिकी for परदारवत्.
8 B, C, H कबन्धेन for कुबन्धेन.

स्त्रीकृते संग्रहणे तस्या दण्डमाह नारदः[1]

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥

ब्राह्मण्यादीनां शूद्रादिगमने दण्डमाह यमः[2]

वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम् ॥
वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥

वृषलः शूद्रः वध्यघातिनः सौनिकास्तेषां स्थान इत्यर्थः । अयं च दण्डोत्यासक्ताविति चन्द्रिकायाम् ॥ व्यभिचारनिश्चयोपायमाह याज्ञवल्क्यः ( २. २८३ )

पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः[3] ।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥

द्वयोरित्यनेनान्यतरेण प्रतिपन्नेपि व्यभिचारे[4] न निश्चयः ॥ दूषण आह याज्ञवल्क्यः ( २. २८९ )

शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने ॥
पशून् गच्छञ्छतं दाप्यो दीनां स्त्रीं[5] गां च मध्यमम् ॥ इति ।

तथा

अयोनौ गच्छतो योषां पुरुषं[6] चाभिमेहतः ॥

---

1 B, D, E, F, H omit नारदः after दण्डमाह.
2 F omits यमः.
3 H परस्त्रियाम्. F omits परस्त्रियाः...कुर्वत इत्यर्थः ( p. 251 l. 2 ).
4 D, E व्यभिचारे निश्चयः.
5 B, C, D, E दीनां स्त्रीं चैव मध्यम०,
6 B, C, D, E पुरीषं for पुरुषम्.

चतुर्विंशतिको दण्डस्तथा [1]प्रव्राजितागमे ॥ (याज्ञवल्क्य २.२९३)

दीनां दुःखितां स्वपत्नीमपि । स्त्रीसंमुखं पुरीषादि कुर्वत इत्यर्थः ॥

## ॥ [2]इति स्त्रीसंग्रहणम् ॥ २५ ॥

## ॥ अथ [3]स्त्रीपुंधर्मः ॥ २६ ॥

तत्र भर्तुः [4]सगुणपत्नीत्यागे दण्डमाह

अनुकूलामवाग्दुष्टां दक्षां साध्वीं [5]पतिव्रताम् ।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन वै पतिः ॥

याज्ञवल्क्यः ( १. ७६ )

आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो [6]भरणं स्त्रियाः ॥

स्त्रियं प्रत्याह स एव ( याज्ञवल्क्य १. ७७ )

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ।
आशुद्धेः [7]संप्रतीक्ष्यो हि महापातकदूषितः ॥

## [8]इति स्त्रीपुंधर्मः ॥ २६ ॥

---

1 B, C, D प्रव्रजितागमे ; E प्रवृजिता०.

2 H reads इति स्त्रीसंग्रहणम् । इति व्यवहारमयूखः समाप्तः (omitting the rest ).

3 D, E स्त्रीपुंधर्माः. F omits अथ स्त्रीपुंधर्मं...गुणीकृतम् (p. 256, l. 7).

4 F सुगुण for सगुण. D, E omit तत्र भर्तु...याज्ञवल्क्यः.

5 नारद०, वि. र., परा. मा., वीर० read प्रजावतीं for पतिव्रताम् and भूयसा for वै पतिः.

6 B omits स्त्रियाः after भरणम्.

7 D, E स प्रतिक्ष्यो हि.

8 C इति पुंस्त्रीधर्मः.

## अथ[1] द्यूतसमाह्वयौ ॥ २७ ॥

याज्ञवल्क्यः ( २. २०१ )

प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले[2] ।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥

प्रसिद्धे अप्रच्छन्ने । धूर्तमण्डले द्यूतस्थाने[3] । सभिको राज्ञा कृतो द्यूताध्यक्षः । एवं प्रकारेण जितं राजा दापयेन्नान्यदित्यर्थः[4] ॥ द्यूते कपटकर्तुर्दण्डमाह स एव ( याज्ञवल्क्य २. २०२ )

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ॥

उपधिः छलम् । राजाज्ञां विना द्यूते दण्डमाह मनुः ( ९. २२४ )

द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा ।
सर्वांस्तान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

द्विजलिङ्गमुपवीतवेदपाठादि ॥ द्यूतधर्मं समाह्वयेतिदिशति याज्ञवल्क्यः ( २. २०३ )

एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये[5] ॥

प्राणिद्यूत इति समाह्वयविशेषणं तद्भिन्न[6] इत्यर्थः ॥

## ॥ इति द्यूतसमाह्वयौ[7] ॥ २७ ॥

---

1 A, B, C, D, E अथ द्यूतम्.
2 D, E मूर्तिमण्डले for धूर्तमण्डले.
3 B, C, E द्यूतस्थले for द्यूतस्थाने.
4 B, C, E नान्यथेत्यर्थः.
5 वि. र. reads प्राणिद्यूतसमाह्वये.
6 A, B, F, G, M तद्भिन्न इत्यर्थः.
7 B, C, E द्यूतसमाह्वयश्च for द्यूतसमाह्वयौ ; C द्यूतसमाह्वयश्च ; A द्यूतसमाह्वयः.

## ॥ अथ प्रकीर्णकम् ॥ २८ ॥

याज्ञवल्क्यः ( २. २९५–२९६ )

ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम् ।
पारदारिकचौरौ वा मुञ्चतो दण्ड उत्तमः ॥
अभक्ष्येण द्विजं दु[1]ष्यन् दण्ड्य उत्तमसाहसम् ।
मध्यमं क्षत्रियं वैश्यं प्रथमं शू[2]द्रमर्धकम् ॥

अभक्ष्यं सुरामूत्रपुरीषादि ॥ स एव ( याज्ञवल्क्य २. २९७ )

कूटस्वर्णव्यवहारी वि[3]मांसस्य च विक्रयी ।
अ[4]ङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ॥

विमांसं गवादिमांसम् । च[5]शब्देनाङ्गच्छेदनमपीति मिताक्षरायाम् । त[6]था

शक्तो ह्यमोक्ष[7]यन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणं तथा ॥(याज्ञवल्क्य २.३००)

विक्रोशः क्रन्दनम् ॥ मनुः ( ८. २९६–२९८ )

मनु[8]ष्यमारणे क्षिप्रं चौरवत् किल्[9]बिषी भवेत् ।
प्रा[10]णभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥
क्षुद्रकाणां पशूनां तु हिंसने द्विशतो दमः ।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥

1 A दूष्यन्. मिता० reads दूष्य; अपरार्क 'द्विजं प्रदुष्याभक्ष्येण'.
2 B, C, D, E शूद्रधर्मिकम्; G शूद्रमधिकम्.
3 D, E निमांसस्य च विक्रयः.
4 B, D, E अङ्गहीनश्च; अपरार्क reads त्र्यङ्गहीनस्तु.
5 G omits च शब्देना...क्षरायाम्.
6 B, C, D, E omit तथा.
7 B, C, D अमोक्षयन्नार्तं दंष्ट्रिणं ( B ०णां ) शृङ्गिणम्.
8 D मनुष्यमारणम्.
9 B, D, F चोरवत्किल्बिषं; मनु reads क्षिप्तं चौरवत्किल्बिषम्.
10 A, B, C, D, E प्राणिभृत्सु.

गर्दभाजा[1]विकान् हन्तुर्दण्डः स्यात्पञ्चमाषकः ।
माषकस्तु भवेद्दण्डः श्वशूकरनिपातने ॥ इति ।

अ[2]यं दण्डो हतमूल्यदानानन्तरं बोध्यः । याज्ञवल्क्यः ( २. ३०१ )

जा[3]रं चौरेत्यभिवदन् दाप्यः पञ्चश[4]तं दमम् ।
उपजीव्य धनं मु[5]ञ्चंस्तदेवाष्टगुणं स्मृतम् ॥

उपजीव्य गृहीत्वा ।

राज्ञोनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम् ।
तन्मन्त्रस्य च भेत्तारं जिह्वां छित्त्वा प्रवासयेत् ॥
( याज्ञवल्क्य २. ३०२ )

अनिष्टं मरणादि । आक्रोशस्तव राज्यभ्रंशो भवत्वित्यादि ॥ मनुः ( ९. २७५ )

राज्ञः कोशापहर्तॄंश्च प्रतिकूलेष्ववस्थितान् ।
घातयेद्विविधैर्दण्डैररीणां चोपजा[6]पकान् ॥

याज्ञवल्क्यः ( २. ३०३ )

मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
राजया[7]नासनारोढुर्दण्ड उत्तमसाहसः ॥

मृताङ्गलग्नं मृतकवस्त्रादि ॥ स एव ( २. ३०४ )

द्विनेत्रभेदिनो राजद्वि[8]ष्टादेशकृतस्तथा ।
विप्रत्वेन च शूद्रस्य जीवतोष्टशतो दमः ॥

---

1 मनु reads गर्दभाजाविकानां तु दण्डः.
2 B, D, E अयं च हतमूल्यदानोत्तरबोध्यः ; C, G अयं च दण्डो मूल्यादिदानान्तरं बोध्यः ( G हतमूल्यादि० ).
3 B, C, D, E जारचौरेत्यभि०.
4 D, E, G पञ्चाशतं दमः ( दमं G ).
5 B, D, E मुञ्चत्.
6 A, B, C, D, E, G चोपजापकम्. वीर० reads दण्डैर्हरेत्सर्वस्वमेव च.
7 B, C, D, E, G ०यानसमारोढुः ; E ०साहसं for ०साहसः.
8 B, C, D, E राजादिष्टदिशकृतस्तथा ( C देशकृत० ; D ०कृतास्तथा ).

नेत्रद्वयभेत्तू राजनिषिद्धकर्मकर्तुर्विप्रवृत्त्या जीवितुश्च शूद्रस्येत्यर्थः । [1]श्राद्धभोजनार्थं तु यज्ञोपवीतधारणे तप्तशलाकया यज्ञोपवीतवद्रेखा कार्येति [2]स्मृत्यन्तरे मिताक्षरायाम् ॥ व्यवहारान्यथाकारिणां दण्डमाह स एव ( याज्ञवल्क्य २. ३०५–३०६ )

दुर्दृष्टांस्[3]तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम्[4] ॥
यो मन्येताजितोस्मीति न्यायतोपि पराजितः ।
तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥

अत्र सर्वत्रानुक्तसंख्येया संख्या[5] पणविषयिणी ज्ञेया । पणस्[6]तु कर्षोन्मितं ताम्रम् । [7]कार्षिके ताम्रिके पणः–इति कोशात्[8] ( अमर. २. ९. ८८ ) । कर्षः पलचतुर्थांशः । वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्रः–इति भास्कराचार्योक्तश्च ( लीलावती २ ) पणः ॥ उत्तमसाहसादिकं तु

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥ इति ( याज्ञवल्क्य १. ३६६ ) ।

तथा[9] उक्तापराधेषूक्तपरिमाणदण्डैर्दमनासंभवेधिकोपि दण्डः । यथाहापस्तम्बः ( ?=गौ. ध. सू. ११. २८ )–दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत् इति ॥ तथा सर्वस्वापहारदण्डे विशेषमाह नारदः ( २०. १०–११ )

---

1 G omits श्राद्ध...क्षरायाम्. E श्राद्धभोजने तु.
2 B, D, E omit स्मृत्यन्तरे.
3 अपरार्क reads सम्यग्दृष्ट्वा तु दुर्दृष्टान्.
4 E समं for दमम्.
5 E संख्यया पण॰.
6 E omits पणस्तु...चतुर्थांशः.
7 A, B, C, D, E, G कार्षिकस्ताम्रिकः पण इति.
8 B, D, E स्मृतेः for कोशात्.
9 E तथापराधेषूक्त॰.

आयुधान्यायुधीयानां वाह्यादीन्[1]वाह्यजीविनाम् ।
वेश्या[2]स्त्रीणामलंकारान् वाद्या[3]तोद्यादि तद्विदाम् ॥
यच्च यस्योपकरणं येन जीवन्ति[4] कारुकाः ।
सर्वस्वहरणेप्येतन्न राजा हर्तुमर्हति ॥

अन्यायाद्गृहीतस्य दण्डस्य प्रतिपत्तिमाह याज्ञवल्क्यः ( २. ३०७ )

राज्ञान्यायेन यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥

त्रिंशद्गुणं वरुणोद्देशेन संकल्प्य विप्रेभ्यो दद्यादित्यर्थः ॥

॥ इति[5] प्रकीर्णकम् ॥ २८ ॥

चर्म[6]ण्वती तरणिजा शुभसंगमस्य
सान्निध्यभाजि कृतशालिनि मध्यदेशे ।
ख्याता भरेहनगरी किल तत्र राजा
राजीवलोचनरतो भगवन्तदेवः ॥

इति श्रीसं[7]गरवंशावतंसमहाराजाधिराजश्रीभगवन्तदेवादिष्टश्रीजगद्गुरु-भट्टनारायणसूरिसूनुपण्डितशिरोरत्नमीमांसापारावारपारीणधुरीणभट्टशंकरसूनोर्भट्टनीलकण्ठकृते भगवद्भास्करे व्यवहारमयूखः स[8]माप्तः ॥

1 D, E वाश्वजीविनाम्. नारद° reads शिल्पद्रव्याणि शिल्पिनाम्.
2 C विशां स्त्रीणाम्.
3 E वाद्यादि तद्विदाम्.
4 E जीवति कारुकः. नारद° reads कारवः.
5 A, B, C, D, F, G, N omit इति प्रकीर्णकम्.
6 A, B, C, D, F, G omit चर्मण्वती...भगवन्तदेवः.
7 D, F इति सेङ्गरवंशा°; B, C, N इति श्रीमीमांसकशंकरभट्टात्मजभट्टनीलकण्ठकृते (B °कण्ठस्य कृतौ; N °कण्ठेन कृते) भास्करे (B भगवद्भास्करे) व्यवहारमयूखः समाप्तः (B omits समाप्तः).
8 D संपूर्णः for समाप्तः; F संपूर्णम्.
D after संपूर्णः adds संवत् १८२० वर्षे ज्येष्ठमासे कृष्णपक्षे तिथौ १० दशम्यां सोमवासरे लिखितमिदं पुस्तकम् । मङ्गलं लेखकानां च पाठकानां च मङ्गलम् । मङ्गलं सर्वलोकानां भूमिभूपतिमङ्गलम् ॥ लेखकपाठकयोः शुभं भवतु । कल्याणमस्तु । श्रीरस्तु; F also has the verse मङ्गलं &c.




# NOTES ON THE VYAVAHĀRAMAYŪKHA.

**Page 1, lines 1-2.** उक्त्वा नृपनय०—Nīlakaṇṭha composed the Vyavahāramayūkha immediately after the Nītimayūkha. In the latter work (p. 59 Benares ed. of 1880) he says 'व्यवहारमयूखे दर्शयिष्यामः'. For the order in which the twelve Mayūkhas were composed, *vide* Introduction (sec. III.).

**Page 1, lines 3-4.** द्विज...गुरुम्—This verse applies both to God S'aṅkara, the presiding deity of the sacred city of Benares and to S'aṅkara, the father of Nīlakaṇṭha. द्विज...न्यम्—who has the moon as the only (or principal) thing (by way of decoration) on his head (with god शंकर); who is the only leader among the best of Brāhmaṇas (with शंकरभट्ट). वृषाध्यक्षम्—who is the lord of the bull (with god शंकर); who supervised over religious duties (of people). 'सुकृते वृषभे वृषः' अमरः. 'वृषो हि भगवान्धर्मः' मनु० 8. 16. शिवया पार्वत्या अन्वितम् or शिवेन (कल्याणेन मङ्गलेन वा) अन्वितं (with शंकरभट्ट). काश्यां...देष्टारम्—who inspired all in Kās'ī; who was the teacher of all in Kās'ī. गुरुम्-पूज्यं (with god शंकर); पितरम्.

**Page 1, lines 5-6.** विरोधि...चकार—several meanings of this verse have been proposed. The idea seems to be that शंकरभट्ट, father of नीलकण्ठ, was the very embodiment of the God S'aṅkara. Following the words of the भगवद्गीता (X. 41 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥') men of genius were deemed to be the *avatāras* of the supreme Being (परः पुमान्). शंकरभट्ट was a profound Mīmāṅsaka and wrote several works on topics connected with the Pūrvamīmāṅsā. *Vide* Introduction (sec. II.). शंकरभट्ट is spoken of as मीमांसाद्वैतसाम्राज्यधुरंधर in the colophon at the end of the Ms. of his Dvaitanirṇaya

and is styled मीमांसाद्वैतसाम्राज्यनीतिज्ञः in the introductory verses of the same work. There were two divergent schools of the Pūrvamīmāṅsā, one headed by Prabhākara ( called गुरु also ) and the other by Kumārila ( called भट्ट also ). नीलकण्ठ says that in ancient times arose the two *avatāras, viz.* प्रभाकर and कुमारिल, who exhibited divergent paths ( of the Pūrvamīmāṅsā system ), but that now the Supreme Being ( god S'aṅkara ) combines in the single person ( एकरूपः ) of शंकरभट्ट the unity of the ( two warring ) mīmāṅsakas. The meaning is that शंकरभट्ट is the only correct expounder of the मीमांसा system and has reconciled the divergent views of प्रभाकर and कुमारिल. The words मीमां...चकार may also mean 'he wields undisputed sovereignty over mīmāṅsakas' ( as परः पुमान् or परं ब्रह्म is एकमेवाद्वितीयं, so शंकरभट्ट is the only मीमांसक without a second, there being no one to dispute his pre-eminence ). Mandlik understands that द्वेधा refers to कुमारिल-भट्ट and शंकराचार्य and says that the last half of the verse tells us that शंकरभट्ट accepted the doctrine of the identity of the human soul with the divine essence propounded by the Mīmāṅsakas. It is no doubt true that the paths of Kumārila and S'aṅkarācārya diverge. But Mandlik's explanation is not satisfactory for the following reasons. In popular language the word मीमांसक stands only for a student of the Pūrvamīmāṅsā, the students of S'aṅkara's system being called Vedāntins or Advaitavādins. The *advaita* doctrine cannot in popular language be said to be propounded by the मीमांसकs. Moreover, शंकरभट्ट, the father of नीलकण्ठ, is known to have written several works on the Pūrvamīmāṅsā, but so far no work of his dealing with *advaitasiddhānta* has come to light, nor is it clear whether he was a thorough-going follower of S'aṅkarācārya's *advaita* system. Being a profound mīmāṅsaka, it is highly probable that he did *not* accept the *advaita* system.

Borradaile thinks that the first half refers to the views of Hemādri and Mādhava. There is no great divergence between the views of these two writers, nor is Hemādri known to have been a profound writer on the Pūrvamīmāṅsā.

**Page 1, lines 7–8.** प्रतारकै...हीयते—नीलकण्ठ says that some writers on व्यवहार accept certain doctrines which lead men astray, that he has omitted such unauthoritative (or baseless) matters, that thereby his work will not suffer, just as worship (अपचिति=पूजा) does not become deficient by the absence of a flower of the sky. खपुष्प is an absolutely non-existent thing. Such absolutely non-existent things are summarised in the following verse:—
एष वन्ध्यासुतो याति खपुष्पकृतशेखरः । मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥
(quoted by क्षीरस्वामी in his comment on अमर० 'आहतं तु मृषार्थकम्').

**Page 1, lines 9–12.** विप्रति...दलम्. व्यवहारः—legal proceeding or matter. व्यवहार is an operation or proceeding which helps in indicating the wrong that is not known (as done by a particular person, at the time when the judicial inquiry is started) and that pertains to one of two parties that have a dispute (about it). The author gives another definition in the words 'वादि... व्यापारः सः'. वादिप्रतिवादिनौ कर्तारौ यस्मिन् सः ०कर्तृकः. संभवन्ति भोगः साक्षिणः (लिखितादीनि) प्रमाणानि च यस्मिन्—in which possession, witnesses and (other) means of proof (such as documents, oaths and ordeals) are possible (according to circumstances). विरोधि...व्यापारः—it is a proceeding that helps in establishing (the truth) in the midst of conflicting alternatives. सं...मदनरत्ने—for the मदनरत्न, *vide* Appendix B. When the plaintiff (वादी) files his plaint (भाषा), the defendant (प्रतिवादी) has to file his reply (उत्तर). This latter is of four kinds (*viz.* मिथ्या, संप्रतिपत्ति, प्रत्यवस्कन्दन, प्राङ्न्याय), as we shall see later on (text p. 14, ll. 14-15). When the defendant

admits the truth of the matter stated in the plaint and does not put forward any ground why judgment should not be given in favour of the plaintiff, it is said to be संप्रतिपत्त्युत्तर (a reply of confession or admission). It will be noticed that in such a case, though there is a plaintiff and a defendant, there is no necessity to employ means of proof such as possession and there is no necessity to establish by reasoning one of two alternatives. Hence the word व्यवहार cannot be applied in its primary literal sense as defined above to a case of संप्रतिपत्त्युत्तर, but it can be applied to it only in a secondary (भाक्त) sense (by analogy). This is the view of the मदनरत्न, which seems to be approved of by नीलकण्ठ. वाद...दलम्—the latter part of the definition (viz the word सम्भ...णकः) serves to exclude वाद, वितण्डा &c. According to the न्यायसूत्र, the भाष्य of वात्स्यायन and the वार्तिक thereon, a disputation (called कथा which is defined in the तर्कभाषा as 'नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः') is of three kinds, वाद, जल्प and वितण्डा. In a वाद there are two opposing propositions both sought to be supported by the *pramāṇas* (such as प्रत्यक्ष, अनुमान, शब्द &c.) and by *reductio ad absurdum* and both put in the five-membered syllogism and at last one of them is established or accepted as the correct one. For example, one disputant may say that the soul exists, another may propound the opposite that there is no soul. Both support their positions by appealing to प्रत्यक्ष, अनुमान, शब्द &c. and at last it is established that there is a soul. A वाद takes place between teacher and pupil or between those who are earnest seekers after truth. A जल्प is a disputation where the only object is to gain a victory over one's opponent. A वितण्डा is mere cavilling. A वैतण्डिक simply finds fault with his opponent's proposition but does not seek to establish a proposition of his own. वाद and वितण्डा are similar to व्यवहार in that in both there are two disputants

opposed to each other (*i. e.* the word वादि...कर्तृकः may apply to वाद and वितण्डा). They are dissimilar in so far that वाद and वितण्डा employ प्रत्यक्ष, अनुमान, शब्द as प्रमाणs: while in व्यवहार the प्रमाणs relied upon are possession, witnesses and documents. This means that the word संभव...माणकः cannot apply to वाद and वितण्डा. 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो **वादः**। यथोक्तोपपन्न, छलजातिनिग्रहस्थानसाधनोपालम्भो **जल्पः**। स प्रतिपक्षस्थापनाहीनो **वितण्डा**।' न्यायसूत्र I. 2. 42-44; 'एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावादस्ति आत्मा नास्त्यात्मेति।...प्रमाणैः तर्केण च साधनं उपालम्भश्चास्मिन् क्रियते साधनं स्थापना उपालम्भः प्रतिषेधः। यावदेकतरो निवृत्त एकतरो व्यवस्थित इति निवृत्तस्योपालम्भः।...स जल्पो वितण्डा भवति, किंविशेषणः, प्रतिपक्षस्थापनया हीनः, यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ प्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तत इति।' वात्स्यायनभाष्य; 'तत्र गुर्वादिभिः सह वादः, विजिगीषुणा सह जल्पवितण्डे।...द्वितीयपक्षवादी वैतण्डिको न किंचित् पक्षं स्थापयति। अपरे तु ब्रुवते दूषणमात्रं वितण्डेति।' न्यायवार्तिक. 'तत्त्वबुभुत्सोः कथा वादः' तर्कभाषा.

The मिताक्षरा (on याज्ञवल्क्य II. 1.) defines व्यवहार as 'अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः। यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति। अन्योपि तद्विरोधेन मदीयमिति'. 'तस्मादत्र व्यवहारशब्देन वादिप्रतिवादिव्यापार एव वक्तव्यः' अपरार्क (on याज्ञवल्क्य II. 1). कात्यायन derives the word व्यवहार and defines it as follows:—प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे। साध्यमूलस्तु यो वादो व्यवहारः स उच्यते॥ (quoted by अपरार्क on याज्ञवल्क्य II. 1, by the स्मृतिच॰ and by वीर॰ p. 5); वि नानार्थेऽव संदेहे हरणं हार उच्यते। नानासंदेहहरणाद् व्यवहार इति स्मृतः॥ (quoted by कुल्लूक on मनु॰ 8. 1 and by वीर॰ p. 6).

**Page 1, line 14—Page 2, line 16.** तत्पदम्-तस्य व्यवहारस्य पदम्—a title (or division) of law. अपरार्क says 'पदं स्थानं विषय इति यावत्' (on याज्ञवल्क्य II. 1.) and 'पदं स्थानं निमित्तमिति यावत्' (on याज्ञवल्क्य II. 5.). स्मृत्याचाराभ्यां व्यपेतः त्यक्तः तेन. आवेदयति चेद्राज्ञे-'राजशब्दः पूगश्रेण्यादीनामुपलक्षणार्थः' सुबोधिनी on मिताक्षरा. ऋणादानं-non-payment of debt. निक्षेपः deposit. अस्वामिविक्रय sale by one who is not the owner. संभूयसमुत्थान partnership. दत्तस्य अनपकर्म—resumption of gifts. वेतनस्य अदानं

स एव तावन्तं पणं दाप्यो राज्ञे। अर्थिना लेखितस्य वस्तुजातस्य सर्वस्यैवापह्नववादी एकदेशे भावितः सर्वमेव लेखितं दाप्यो नालेखितम्। पुत्रादिः पित्रागृणं न जानामीति उत्तरवादी चेदेकदेशे भावितस्तावन्मात्रमेव[2] दाप्यः। असिद्धमर्थमासेधादिना साधयन्दण्ड्यः। प्रकृतमर्थं दाप्यश्च। यः प्रपन्नं याच्यमानः पलायेत यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किंचिद्वदेत् सोपि। सर्वार्थसाधनतयोपदिष्टैः साक्षिभिरेकदेशेधिके वाभिधीयमाने प्रमाणान्तरेणैव साध्यसिद्धिरवसेया। साहसादौ त्वेकदेशेपि यत्र त्वेकक्षेत्रादौ पौर्वापर्येणोभयोः स्वत्वहेतौ साक्षिणः संभवन्ति तत्रोत्तरकालीनस्वत्ववादिनः साक्षिण आदेयाः साध्यसिद्धिं प्रति। तथा सर्वत्रर्णाद्यर्थविवादे प्रतिदानेनाधारणाद्युत्तरकार्यमेव भावितं सदादेयं न ग्रहणेन धारणादि पूर्वकार्यं सिद्धमपि। आधिदत्तक्रीतेषु तु पूर्वकालीनमेव कार्यमादेयं नोत्तरकालीनम्। सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया। आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा॥ इति **याज्ञवल्क्योक्तेः**। सभ्य[3]दृष्टोपि व्यवहारः पराजितस्य कुदृष्टबुद्ध्या अपरितोषश्चेत्परावर्तते। स च सोत्तर[4]साध्येन राज्ञा सपणो द्रष्टव्यः। तत्र कुदृष्टवादी पराजितश्चेद् दण्ड्यः। जितश्चेदधिकृता दण्ड्याः। पूगश्रेणिकुलदृष्टोपि परावर्तते। भिन्नजातीनां भिन्नवृत्तीनामेकस्थाननिवासिनां समूहाः पूगाः। नानाजातीनामप्येकजातीयकर्मोपजीविनां संघाताः श्रेणयः। ज्ञातिसंबन्धिबन्धूनां संघाताः कुलानि। तत्र कुलदृष्टो राजपर्यन्तमारोहति। राजदृष्टस्तु कुलपर्यन्तं नावरोहति बलोपधिनिर्वृत्तो न चेत्। बलोपधिविनिर्वृत्तान् व्यवहारान् निवर्तयेदिति वचनात्। उपधिर्भयम्। स्त्रीशत्रुमत्तोन्मत्तार्तव्यसनिबालभीतासंबद्धकृता नक्तं गृहाभ्यन्तरे ग्रामाद्बहिः कृताः पुरराष्ट्रराजविरुद्धाश्च परावर्तन्ते। मत्तो मदनीयद्रव्येण। उन्मत्तो वातादिना। आर्तो व्याधिना। इष्टवियोगादिजन्यं दुःखं प्राप्तो व्यसनी। अनियुक्तासंबन्धी असंबद्धः। इति[5] **सभापतिकृत्यनिरूपणम्।**

---

१ B तं पणं दाप्यः

२ B तावन्मात्रं दाप्यः

३ A सभादृष्टोपि

४ B सोत्तरसभ्येन

५ B reads इति श्रीशंकरभट्टात्मजनीलकण्ठकृते व्यवहारतत्त्वे सभापति०

# अथ प्रमाणप्रपञ्चः ।

प्रमाणं द्विविधं मानुषं दैविकं च । मानुषं पुनस्त्रिविधम् । भुक्तिः साक्षिणो लेख्यं च । दैविकभेदा वक्ष्यन्ते । मानुषाभाव एव दिव्यमादेयं नान्यथा । यत्र सवृद्धिकर्णादानापह्नवादौ ग्रहणादिप्रधानैकदेशे मानुषसंभवो न वृद्धिविशेषादौ तत्रापि मानुषमेव न दिव्यम् । साहसपारुष्यबलोद्भवकार्येषु साक्षिणो दिव्यं वा । पूगश्रेणिगणादिस्थितौ लेख्यमेव । द्वारमार्गजलवाहादिषु भुक्तिरेव । वेतनादानक्रयविक्रयानुशयद्यूतसमाह्वयेषु साक्षिण एव । तत्र भुक्तिरुपभोगः । स सागमो दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिसमक्षश्च[1] प्रमाणमादेयः स्वत्वं प्रति । स्वत्वहेतुरागमः तज्ज्ञानसापेक्षः सागमः । अप्रतिरवो निराक्रोशः । पूर्वक्रमागतस्तूक्तलक्षणो निरागमोप्यादेयोसत्यनागमस्मृतिपारम्पर्ये[2] । पित्रादीनां त्रयाणां क्रमः पूर्वक्रमस्तेनागतो वर्षशताधिक इति यावत् । यदि पित्रादिरेवाभियुक्तः परेतः स्यात्तदा पुत्रादेः स्वत्वं प्रति पूर्वक्रमागतोपि सागम एवादेयः । तथा चतुर्णामाद्ये पुरुषे साक्षिभावित आगम एवादेयो न भोगः । मध्यमयोः स्तोकेनापि भोगेन युक्त एवागम आदेयो न भोगरहितः । चतुर्थे विशिष्टो भोग एवादेयो नागमः । अनागममर्थमुपभोक्ता चोरवद्दण्ड्यः । पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी । परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ इति । अयमाशयः । अर्थिसमक्षनिराक्रोशविंशतिवर्षोपभोगादूर्ध्वं स्वामिना क्षेत्रं भावितोपि तदेव दाप्यः । न तु तत्कालीनमुपभोगनष्टं फलम् । परोक्षभोगे[3] समक्षभोगे वा साक्रोशे विंशतेरूर्ध्वमपि उपभोगे नष्टं फलं निष्क्रयरूपेण दाप्यः । विंशतेः प्राक् तु समक्षनिराक्रोशभोगेपि उपभुक्तं दाप्यः । धने च हस्त्यश्वादौ विंशतिस्थाने दशकं निक्षिप्यैवं योज्यम् । राजदण्डस्तूपभुक्तसमो[4] विंशतेर्दशकाच्चोर्ध्वमप्यस्त्येव । तत्राद्यस्योपभोक्तुरभियुक्तस्यागममसाधयतो दण्डः । द्वितीयस्याविच्छिन्नाप्रतिरवसमक्षभोगमनुद्धरतो न त्वागममनुद्धरतः । तृतीयस्य क्रमागतभोगमात्रमनुद्धरतो न त्वागमं विशिष्टभोगं वानुद्धरतः । आधिसीमोपनिक्षेपोपनिधिषु जडबालराजस्त्रीश्रोत्रियस्वेषु तु भूमौ समक्षनिराक्रोशविंशतिवर्षोपभोगादूर्ध्वं धनस्य तादृशदशवर्षोपभोगादूर्ध्वमप्युपभुक्तमुपचयं दाप्यः । आध्यादीनां चिरकालोपभोगबलेनापहर्ता धने विवादास्पदीभूतद्रव्यसमं गृहक्षेत्रादिषु मर्यादाप्रभेदादौ वक्ष्यमाणं दण्डं दाप्यो दर्पोपशमक्षमं वा । दरिद्रश्चेद्दि (?द्वि) ग्दण्डेन वा दण्ड्यः शरीरदण्डेन वा दण्ड्यो ब्राह्मणव्यतिरिक्तः । सर्वोपस्थोदरजिह्वाहस्तपादचक्षुर्नासाकर्णदेहानां यन्निमित्तोपराधस्तत्र कार्यो वधो वा । यद्वा कर्म कारयितव्यो बन्धनागारे वा प्रवेशनीयः । ब्राह्मणस्य तु

१ B ०समक्षप्रमाण०

२ A ०स्मृतिपारम्पर्यः

३ B परोक्षभोगेन

४ B omits (by oversight) क्तसमो…रोहणा below (p. 446, l. 1)

कर्मवियोगविख्यापननिर्वासनाङ्कनशिरोमुण्डनगर्दभारोहणानामेकम् । शारीरस्तु नास्त्येव । वस्त्रादिना चक्षुषी निरुध्य पुरान्निष्कासनं निर्वासनम् । ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पगमनेषु क्रमा[1]दशिरस्कपुरुषसुराध्वजश्वपदभगाकृतिभिर्ललाटे चिह्नकरणमङ्कनम् । प्रनष्टाधिगतं राज्ञा वर्षमात्रं संरक्ष्य श्रुतवृत्तसंपन्नब्राह्मणस्य चेद्वर्षत्रयमूर्ध्वमुपभोक्तव्यम् । रथ्यादौ परिभ्रष्टं[2] शौल्किकादिभिरधिगत्य राज्ञे समर्पितं प्रनष्टाधिगतम् । वर्षाद्वर्षत्रयाद्वार्वाक् स्वाम्यागतश्चेत्तस्मै कृत्स्नं देयं यद्यसौ रूपसंख्यादिभिर्लिङ्गैर्भावयत्यन्यथा स्ववाची दण्ड्यः । वर्षाद्वर्षत्रया[3]दूर्ध्वं तु प्रथमे वर्षे द्वादशं द्वितीये दशमं तृतीयादिषु षष्ठं भागमादाय शेषं प्रतिदेयं सुवर्णं चेत् । अश्वादावेकशफे तु चतुरः पणान्मानुषे पञ्च महिषे गव्युष्ट्रे च द्वौ द्वौ अजाविषु च पादमा[4]दानम् । राज्ञा स्वभागचतुर्थांशोधिगन्त्रे प्रदातव्यः । स्वामी नैवागतश्चेच्चतुर्थमंशमधिगन्त्रे दत्त्वा शेषं राजा गृह्णीयात् । राजा निधिं लब्ध्वार्धं ब्राह्मणेभ्यो दत्त्वा शेषं गृह्णीयात् । विद्वान् ब्राह्मणस्तु कृत्स्नं स्वयमेव । अविद्वद्ब्राह्मणक्षत्रियादिना निधौ लब्धे तस्मै षष्ठमंशं दत्त्वा शेषं राजा गृह्णीयात् । अनिवेदितविज्ञातः कृत्स्नं निधिं दाप्यः शक्त्या दण्डं च । तत्स्वाम्यागतश्चेत् षष्ठं द्वादशं[6] वांशमादाय शेषं तस्मै[5] दद्याद्राजा । तथा चोरैरपहृतं तेभ्यो विजित्याशक्तौ स्वकोशादेव दद्यात् । इति श्रीशंकरभट्टात्मजनीलकण्ठकृते व्यवहारतत्त्वे भुक्तिप्रपञ्चः ।

**अथ साक्षिप्रपञ्चः** । तत्र साक्षी द्वेधा साक्षाद्दर्शनाच्छ्रवणाच्च । स पुनर्द्विविधः कृतोऽकृतश्च । कृतः साक्षित्वेन निरूपितः, अकृतोऽनिरूपितः । तत्र कृतः पञ्चविधो लिखितः स्मारितो यदृच्छाभिज्ञो गूढ उत्तरसाक्षीति । लेख्यनिवेशितो लिखितः । पुनः पुनः कार्यं स्मार्यमाणः स्मारितः । यदृच्छयैवागतः साक्षीक्रियमाणो यदृच्छाभिज्ञः । प्रत्यर्थिवचनं गूढ एव श्राव्यमाणो गूढः । श्रवणात् श्रावणाद्वा साक्षिणामप्युपर्युपरि साक्ष्यं भाषमाण उत्तरः । ग्रामः प्राड्विवाकलेखकसभ्यानामन्यतमो राजा व्यवहारकार्याधिकृतोर्थिप्रत्यर्थिप्रहितः कुल्य इत्यकृताः षट् । ते च तपस्विनो दानशीलाः कुलीनाः सत्यवादिनो धर्मप्रधाना ऋजवः सपुत्राः सधना नित्यादिकर्माचरणशीलाः सवर्णाः सजातयोसंभवेऽसवर्णाश्चाप्यवराः । उभयानुमतावेको द्वौ वा साक्षिण आदेयाः । स्त्रीणां स्त्रियोपि । उक्तलक्षणानामसंभवेन्येप्यसाक्षिव्यतिरिक्ताः । श्रोत्रियतापसप्रव्रजितस्त्रीबालवृद्धपितृविवादिगुरुकुलवासिकितवमत्तोन्मत्ताभिशस्तपतितपाखण्डिरङ्गावतारिकूटकृद्विकलेन्द्रियाप्तार्थसंबन्धिसहायरिपुस्तेनसाहसिचण्डदृष्टदोषनिर्धूतभिन्नस्वयमुक्तिमृतान्तराया असाक्षिणः । तापसो वानप्रस्थः । वृद्धोऽशीतिकावरः । चण्डः कोपनः । दृष्टदोषो

---

१ B ०क्रमाद्विशिरस्तु

२ B परिभ्रष्टस्य

३ B त्रयाद्वोर्ध्वम्

४ B पादं पादमादाय प्रतिपादनम्

५ B omits तस्मै

६ B द्वादशांशमादाय

दृष्टवितथवचनः । निर्धूतो बन्धुभिस्त्यक्तः । द्वैधे सर्वे भेदादसाक्षिणो भिन्नाः । अनिर्दिष्टः स्वयमेवागत्य वदन् । स्वयमुक्तिः सूचील्यपि[1] । यस्य कृते साक्ष्यं वक्तव्यं[2] तस्मिन्मृतेऽनिवेदिते वासौ मृतान्तरः । मुमूर्षुणा स्वस्थेन वा पित्रादिना पुत्रादयः श्राविताश्चेदस्मिन्नर्थेमी साक्षिण इति तत्र मृतान्तरोप्यादेयैः[3] । स्त्रीसंग्रहणचौर्यपारुष्यसाहसेषु तु तपआदिगुणरहिता वचननिषिद्धाश्चादेयाः[4] । न दुष्टभिन्नस्वयमुक्तयः[5] । संग्रहणादीन्यपि[6] स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानि साहसानि । श्रोत्रियादयो वचननिषिद्धाः । कितवाद्या दुष्टाश्च यथायोगमूह्याः[7] । वादिप्रतिवादिभ्यां परस्परेणोद्दिष्टाः साक्षिणो रहसि नानुसर्तव्याः । उद्दिष्टेषु साक्षिषु क्रियान्तरनिरपेक्षश्चेदर्थी तदा पराजितो ज्ञेयः[8] । साक्षिषु दोषमुद्भाव्य साधयितुं न शक्नोति चेत्प्रतिवादी सारानुसारेण दण्ड्यः । शक्नोति साक्षिण एव नादेयाः । साक्षिणां स्वभावोक्तमेव वचनमादेयं न तु ते पुनः पुनः प्रष्टव्याः । विस्मरणादिनार्थस्य भावमभावं न प्रतिपादयन्ति चेत्प्रमाणान्तरेण निर्णयः कार्यः । प्राड्विवाकः शुचिर्मध्येसभं वादिप्रतिवादिसंनिधौ समेत उदङ्मुखान्प्राङ्मुखान्वा साक्षिणः पूर्वाह्णे देवब्राह्मणसान्निध्ये सान्त्वेन साक्ष्यं पृच्छन्नेवं श्रावयेत् । अन्यथा ब्रुवतः सत्यं ते नश्यतीति ब्राह्मणं वाहनायुधानि तव विफलानीति क्षत्रियं गोबीजकाञ्चनानि तव विफलानि भविष्यन्तीति वैश्यं शूद्रं तु सर्वाणि पातकानि तव भविष्यन्तीति । ये पातककृतां लोका महापातकिनां तथा[9] । अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् । स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् । सुकृतं यत्त्वया किंचिज्जन्मान्तरशतैः कृतम् । तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ इति वा । गोरक्षका वाणिजकाः कारवश्च कुशीलवाः । प्रेष्या वार्धुषिकाश्च ये द्विजास्तान् शूद्रवत् । श्राविताः सन्तो यदि दैवमानुषोपप्लवरहिताः षट्चत्वारिंशकाहादर्वाङ्[10] न[11] ब्रूयुस्तदा तस्मिन्नहनि सवृद्धिकमृणं दशमांशसहितं दाप्यः । तत्र दशमोंशो राज्ञः । साक्षिणां द्वैधे बहूनां वचनमादेयम् । समसंख्येषु गुणिनां कतिपयेषु गुणिषु इतरेषु बहुष्वपि गुणिनां गुणिषु गुणवत्तमेषु[12] गुणवत्तमानां सर्वथागृह्यमाणविशेषास्तु भेदादसाक्षिणः । साक्षिणो

१ A सुचील्यपि

२ B यस्य कृते यस्य चार्थे साक्ष्यं

३ A प्यदेयः

४ B निषिद्धा आदेयाः

५ A न भिन्नदुष्ट०

६ A संग्रहादीन्यपि

७ A omits कितवाद्या...मूह्याः

८ A omits उद्दिष्टेषु...ज्ञेयः

९ B ०पातकिनस्तथा

१० B ०त्वारिंशाहादर्वा०

११ A omits न after अर्वाङ्

१२ B omits गुणवत्तमेषु

यस्य प्रतिज्ञां सत्यां ब्रूयुस्तस्य जयो यस्यासत्यां पराजयस्तस्य । तत्र साक्ष्ये साक्षिभिरुक्ते-प्यर्थिनो[1] स्वप्रत्ययविसंवादित्वेनो[2]ासंनिहिताः पूर्वसाक्षिभ्यो गुणवत्तमा द्विगुणा वा साक्षिणः प्रमाणीकर्तव्याः । पूर्वनिर्दिष्टासंभवेऽनिर्दिष्टा अपि । पूर्वसाक्षिणस्तु कूटास्तेषामसंभवे दिव्यम् । तत्राप्यपरितोषे न प्रमाणान्तरमस्ति । व्यवहारसमाप्तिरेव । सप्ताहाद्यधिकराजिकदैविकव्यसनोद्भवानुद्भवाभ्यां साक्षिणः परीक्ष्याः । तत्र दोषावधारणे त एव विप्रतिपन्नमृणं दाप्याः । सारानुसारेण दण्ड्याश्च । कूटः कूटकृत्कूटतुल्यश्च । लोभादिकारणविशेषापरिज्ञानेऽनभ्यासे विवादे[3]पराजयनिमित्तं प्रतिपदोक्तं दण्डं द्विगुणं दण्ड्यः पृथक् पृथक् । तत्र महाविषये कौटसाक्ष्ये ब्राह्मणो देशान्निर्वास्यै[4] एव न दण्ड्यः । लोभादिकारणविशेषपरिज्ञानेऽनभ्यासे त्वेवम् । लोभे उत्तमसाहसम् । भये मध्यमसाहसम् । मैत्र्यां चतुर्गुणं पूर्वसाहसम् । कामे दशगुणं पूर्वसाहसम् । क्रोधे त्रिगुणमुत्तमसाहसम् । अज्ञाने द्वे शते । बालिश्ये शतं दण्ड्यः । लोभादिकारणविशेषपरिज्ञानेभ्यासे त्विमं दण्डं दण्डयित्वा ब्राह्मणो विवास्यः क्षत्रियादिः प्रवास्यः । लोभादि[5]कारणविशेषापरिज्ञानेभ्यासे तु विवादपराजयनिमित्तं प्रतिपदोक्तं द्विगुणं दण्डं दण्डयित्वा ब्राह्मणो विवास्यः क्षत्रियादिः प्रवास्यः । कूटकृद्यो धनदानादिना कूटान् साक्षिणः करोति । कूटतुल्यो यो विप्रतिपन्नमर्थं विशेषतो जानन्नपि साक्ष्यं नाङ्गीकरोति । विवासनं[6] देशान्निर्वासनं भग्नगृहीकरणं नग्नीकरणं च । जातिद्रव्यगुणाद्यपेक्षया व्यवस्थाप्यम् । प्रवासनं ताडनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेण द्रष्टव्यम् । साहसादिषु[7] ताम्रिकाः पणा ज्ञेयाः । तत्परिमाणं पूर्वसाहसादिमानं च वक्ष्यते । लोभोर्थलिप्सा मोहो विपर्ययज्ञानम् । कामः[8] अभिलाषः । अज्ञानमस्फुटज्ञानं बालिश्यं ज्ञानानुत्पादः । कूटसाक्षिणो दण्डयित्वा पुनर्व्यवहारः प्रवर्तनीयः । कृतो[9]पि कौटसाक्ष्ये विदिते निवर्तनीयः । यस्तु साक्षिभिः[10] सह साक्ष्यं श्रावितः सन्निगदकाले तत्तेभ्यो[11] निह्नुते नाहमत्र साक्षी भवामीति स विवादपराजयनिमित्तप्रतिपदोक्तं दण्डमष्टगुणं दाप्यः । तावद्दण्डदानाशक्तौ ब्राह्मणस्त्रेधा विवास्यो विषयानुसारेण ।

---

१ B reads ०र्थिनः

२ B reads ०संवादित्वेनापरितोषेण तेनासंनि०

३ B reads विवादे

४ B निर्वास्यो न दण्ड्यः

५ B reverses the order of the two sentences लोभादि...प्रवास्यः and कूटकृ...करोति

६ A निर्वासनं for विवासनम्

७ B सहस्रादिषु

८ A omits कामः अभिलाषः

९ B कृतेपि

१० A omits साक्षिभिः सह

११ A omits तत्तेभ्यः

इतरेषां जात्युचितकर्मकरणनिगडबन्ध[1]कारागृहप्रवेशादि द्रष्टव्यम् । कूटादिष्वपि इदं यथासंभवमूह्यम् । सर्वे निह्नुवते चेत्समानदोषाः । साक्ष्यमुक्त्वा पुनरन्यथा वदन्तोनुबन्धाद्यपेक्षया दण्ड्याः । साक्षिणोपि सत्यवचने वर्णिवधप्रसक्तौ सत्यं न वदेयुः सत्यवचनेऽसत्यवचने च तत्प्रसक्तौ न किंचिद्वदेयुः । तत्र साक्ष्यनृतवचनप्रयुक्तः साक्ष्यवचनप्रयुक्तश्च दोषो नास्ति । अवचने राजा न मुञ्चति चेद्भेदादसाक्षित्वं कर्तव्यम् । सर्वत्र कालान्तरेर्थतत्त्वावगतावपि राजदण्डो नास्ति । भेदादसाक्षित्वासंभवे सत्यमेव वदितव्यम् । तत्र वर्णिवधदोषो नास्ति । एवं पान्थादीनां चौरादिप्रश्नेषु । इ[2]ति श्रीशंकरभट्टात्मजनीलकण्ठकृते व्यवहारतत्त्वे साक्षिनिरूपणम् ।

**अथ लेख्यप्रपञ्चः** । लेख्यं द्विविधं शासनं जानपदं च । चीरकमित्यपि शासनम् । राजा भूनिबन्धादि दत्त्वा कालजातिस्वप्रतिग्रहीतृनामतत्पित्रादिनाममीमांसकाद्युपनामक्षेत्रादिपरिमाणप्र[3]माणाद्युपेतं समुद्राचिह्नितं ताम्रपट्टादौ लिखेत् । जानपदं द्विविधं स्वहस्तकृतमन्यकृतं च । अनयोर्देशाचारवशेन प्रामाण्यम् । तदुभयं धनिकाधमर्णिकयोः स्वरुच्या व्यवस्थितेर्थे कालान्तरे विप्रतिपत्तिनिरासेन कालवस्तुतत्त्वनिर्णयाय कार्यम् । उक्तलक्षणाः साक्षिणो वा कार्याः । धनिकाधमर्णिकनामजातिगोत्रमीमांसकादिगौणनामपितृनामद्रव्यजातिसंख्यादिचिह्नितं संब[4]न्धकालादियुक्तमधमर्णः स्वहस्तेन लिखेदसाक्षिकं प्रतिनियतदेशभाषयापि । नात्र राजशा[5]सनवत्साधुशब्दनियमोस्ति । तदिदं स्वहस्तकृतमादेयं बलोपध्यादिकृतं न चेत् । उपधिः क्रोध[6]लोभभयादिः । यत्तूक्तलक्षणमधमर्णः ससाक्षिकम[7]न्येन लेखयेत्तदन्यकृतम् । तत्र व्यवस्थितार्थे लिखिते सत्यधमर्ण आत्मीयं नाम स्वहस्तेन पत्रे लिखेद् यदत्रोपरि लिखितं तन्मतं ममामुकपुत्रस्येति । ये चात्र साक्षिणो लिखितास्तेपि आत्मीयपितृनामपूर्वकमस्मिन्नर्थेहममुकः साक्षीति स्वहस्तेनैकैकशो लिखेयुः । यद्यधमर्णः साक्षी वा लिपिज्ञो न स्यात्तदान्येन साक्षी च साक्ष्यन्तरेण सर्वसाक्षिसमक्षं लेखयेत् । लेखकोपि तु मयाभ्यर्थितेन मयामुकेनामुकपुत्रेणैतल्लेख्यं लिखितमित्येवमन्ते लिखेत् । देशान्तरावस्थानच्छेदनादिना व्यवहारप्राप्तौ देशान्तरस्थपत्रानयनाय दुर्गाद्यपेक्षया कालो दातव्यः । दुर्गदेशावस्थिते नष्टे वा पत्रे तन्निवेशितसाक्षिभिरेव निर्णयः । तदभावे दिव्येन । लेखेऽशुद्धिशङ्कायां स्वहस्तलिखितान्तरसंवादादिना निर्णयः कार्यः । तदसंभवे तदारूढ-

---

१ B omits बन्ध

२ B reads इति साक्षिनिरूपणम्

३ B ०प्रमाणाद्युपहितम्

४ A संबध (संवत्?)

५ A omits राजशासनवत्

६ A ०लोभादिः

७ A has the 9th leaf missing, which begins with ०मन्येन लेखयेत् and ends with the words स्तत्समाषा इत्येते ( p. 450, l. 14 below ).

साक्षिभिस्तदभावे दिव्येन । युगपत् कृत्स्नदानाशक्तौ यथायथा दत्तं तथातथा पूर्वलेख्य-पृष्ठेभिलिखेदधमर्णे उत्तमर्णो वा प्राप्तम् । यद्वा प्रवेशपत्रं स्वहस्तलिखितचिह्नितमधमर्ण उत्तमर्णाय दद्यात् । युगपत् क्रमेण वा कृत्स्ने ऋणे दत्ते लेखं पाटयेत् । दुर्गदेशावस्थिते नष्टे वा पत्रेधमर्णस्वनिवृत्त्यर्थं पूर्वोक्तक्रमेणोत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यात् । ससाक्षिकं त्वृणं पूर्वसाक्षिसमक्षमेव दद्यात् । राजकीयं व्यवस्थापत्रमपि तु राजमुद्रा-चिह्नितं जानपदव्यवस्थापत्रवत् । तथा राजकीयं जयपत्रं हीनपत्रं वा । तत्र जयपत्रं साध्योत्तरक्रियावधारणयुक्तप्राड्विवाकादिस्वहस्ताङ्कितं राजमुद्रामुद्रितं जयिने वादिने कालान्तरे प्राङ्न्यायविधिसिद्ध्यर्थं दद्यात् । तत्र सभासदो मतममुकपुत्रस्येति स्वहस्त-लिखितमेकैकशो दद्युः । तेषां परस्परानुमतौ निःशल्यो विवादोन्यथा सशल्यः । यत्र तु—अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥ इत्येवं पञ्चविधा हीनता तत्र हीनपत्रं दद्यात्कालान्तरे दण्डप्राप्त्यर्थमित्यादि । **इति लेख्यप्रपञ्चः ।**

**अथ दिव्यम्** । तुलाग्निरुदकं विषमिति चत्वारि दिव्यानि । अन्ये दिव्यभेदाः शपथा इति व्यपदिश्यन्ते । ते च कोशस्तण्डुलास्तप्तमाषा इत्येते । तथा देवतापितृपादस्पर्शः पुत्रदारसुहृदां च शिरःस्पर्शः शस्त्रवाहनगोबीजकाञ्चनानां च स्पर्शः सत्यसुकृतनाशवचनं चेत्येवमादयः । अन्ये च घटसर्पादयो दिव्यभेदास्तत्तद्देशाचारतो ज्ञेयाः । तत्र तुलादीनि चत्वारि मदाभियोगेष्वेव सावष्टम्भेष्वेव च दातव्यानि । राजद्रोह-महापातकमहाचौर्येषु त्वभिशङ्कितेष्वपि । कोशस्तु महाभियोगे शङ्किते सावष्टम्भे वा विशेषेण दातव्यः । तण्डुलास्त्वल्पचौर्यशङ्कायामेव । तप्तमाषस्तु महाचौर्याभिशङ्कायाम् । अन्ये पुनः शपथाः स्वल्पार्थाभियोगेषु । सहस्राधिकविषयस्य स्तेयस्य साहसस्याभियोगो महाभियोगः । शीर्षकस्थेन कृतः सावष्टम्भः पराजयनिमित्तं दण्डमङ्गीकृतवतेति यावत् । पातित्यावहद्रव्यापहारे तु सहस्रे घटस्तदर्धेग्निस्तदर्धे सलिलं तदर्धे विषं देयम् । सहस्रादिताम्रिकपणानामपह्नवे तु सर्वस्य मूल्यं हेम परिकल्प्य सुवर्णानां शतापह्नवे विषम-शीत्यपह्नवेग्निः षष्ट्यपह्नवे जलं चत्वारिंशदपह्नवे घटं त्रिंशदपह्नवे तदर्धापह्नवे च कोशमानम् । तदर्धापह्नवे तण्डुलास्तदर्धार्धापह्नवे पुत्रादिशिरःस्पर्शं तदर्धार्धापह्नवे लौकिकीं क्रियां दद्यात् । सुवर्णः षोडशमाषात्मकः । तुलादीनि दिव्यान्यर्थिप्रत्यर्थिनोरि-

१ B omits the words पुत्रदारसुहृदां...चेत्येवमादयः

२ B omits सावष्टम्भेष्वेव च

३ B reads तण्डुलादिस्त्वल्पचौर्याभिशङ्का०

४ B reads ०माषास्तु and ०शङ्कायामेव

५ B reads षष्ट्यपह्नवे तण्डुलास्तदर्धार्धापह्नवे पुत्रादिशिरःस्पर्शं and repeats the words तदर्धार्धापह्नवे तु...पुत्रादिशिरःस्पर्शम् ।

६ B लौकिकीः क्रियाः

च्छैयैव कुर्यादन्यतरः शिरःस्थायी चेत् । शिरःस्थायी दण्डाभ्युपगमावष्टम्भेनाभियोक्ता । स्त्रीबालवृद्धान्धपङ्गुतपस्विव्रतिनां तु अवष्टम्भाभियोगेभियोज्यत्वेभियोक्तृत्वे वा न दिव्यं किं तु अभियोक्तुरेवाभियोज्यस्यैव च । परस्पराभियोगे तु विकल्प एव । महापातकादिशङ्काभियोगे तु स्त्र्यादीनामपि दिव्यम् । दिव्यानि शपथाश्च यथासंभवमृणादिविवादेष्वपि योज्याः । प्राड्विवाकः पूर्वेद्युरुपोषितः पूर्वेद्युरुपोषितं त्रिरात्रोपोषितं वोदिते सूर्ये सचैलकृतस्नानं दिव्यग्राहिणमाहूय नृपस्य सभ्यानां ब्राह्मणानां च संनिधौ भानुवारे दिव्यानि कारयेत् । तत्र पूर्वाह्णे घटाग्निकोशान्मध्याह्ने जलं रात्रौ पश्चिमे यामे दिवा वा पूर्वाह्णे विषम् । तण्डुलतप्तमाषप्रभृतीस्तु पूर्वाह्ण एव । अह्नस्त्रिषु भागेष्वाद्यद्वितीयौ पूर्वाह्णमध्याह्नौ । तथा हेमन्तशिशिरवर्षास्वग्निः । ग्रीष्मशरदोरुदकं न हेमन्तशिशिरवर्षासु । हेमन्तशिशिरयोः सप्तयवमात्रं विषं न वर्षासु । तुलां सर्वदैव न प्रवाते न मध्याह्नापराह्णसंध्यासु । अह्नस्तृतीयो भागोपराह्णः । कोशादि सर्वशपथाश्च सर्वदैव । चैत्रवैशाखमार्गशीर्षेषु सर्वाणि । तत्र चैत्रादिषु स्त्र्यादीनां ब्राह्मणस्य च तुलैव दातव्या क्षत्रियस्याग्निरेव । अग्निः फालस्तप्तमाषश्च । वैश्यस्य जलमेव । शूद्रस्य विषमेव वर्षासु । सर्वेषामग्निरेव हेमन्तशिशिरयोः । क्षत्रियवैश्यशूद्राणामग्निर्विषं वा । ब्राह्मणस्याग्निरेव न कदाचिद्विषम् । ग्रीष्मशरदोस्तु सर्वेषां जलमेव न स्त्रीणाम् । तासां साधारणं तुलायेव । कुष्ठिनां श्वासकासिनां पित्तश्लेष्मवतां दुर्बलानां च साधारणं तुलायेव न त्वग्नितोयविषाणि । तथाभिशस्तानां देवायतने नृपद्रोहिणां राजद्वारे प्रतिलोमप्रसूतानां चतुष्पथेन्येषां सभामध्ये दिव्यं देयम् । अस्पृश्याधमदासम्लेच्छपापिप्रतिलोमप्रसूतानां तु तत्प्रसिद्धानि दिव्यानि निर्दिशेत् । **इति दिव्यमातृका ।**

**अथ घटविधिः । नारदः ।** वानस्पत्येन मन्त्रेण छित्त्वा वृक्षं तु यज्ञियम् । तत इष्टे शुचौ देशे कर्तव्या प्राङ्मुखी तुला ॥ चतुरस्रा चतुर्हस्ता दृढा ऋज्वी सुनिश्चला । कटकत्रयसंबद्धा कर्कटादिसमन्विता ॥ कर्कटौ तुलान्तयोः शिक्याधारावीषद्वक्रावायसकीलौ । हस्तषट्कमितौ पादौ कृत्वा खेयौ द्विहस्तकौ । हस्तद्वयमितं कार्यं तयोरध्यर्धमन्तरम् ॥ पार्श्वयोस्तोरणे कार्ये घटादुच्चे दशाङ्गुले । ताभ्यामधोमुखौ कार्यौ घटमस्तकचुम्बिनौ ॥ मृन्मयौ सूत्रसंबद्धाववलम्बौ च साक्षिणौ । आस्तीर्य प्राङ्मुखान्दर्भान् शिक्ययोः पश्चिमे नरम् ॥ इष्टकाः पिटकं ग्राव्णः पांसून्वान्यत्र तोलयेत् । उपरि क्षिप्तमम्भो न प्लवते चेत्समो घटः ॥ परीक्ष्यो हेमकाराद्यैरवलम्बसमस्ततः । संनिविष्टो यथा शोध्यः पाण्डुलेखादिना तथा । चिह्नं शिक्यतले कृत्वा शोध्यं समवतारयेत् । अथ ध्वजपताकाभिस्तुलामलंकृत्य तस्यां प्राड्विवाकः प्राङ्मुखः प्राञ्जलिर्भूत्वा धर्ममावाहयेदेवम् । एह्येहि

---

१ B ०रिच्छयैकतरः
२ B reads दिव्यदानम्
३ B reads पापकारि
४ A reads ०संबद्धावचलं वौ च
५ A reads पितृकं for पिटकं

भगवन्धर्म अस्मिन्दिव्ये समाविश । सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥ इति । ततोऽष्टदेवताः प्रागादिष्विन्द्रादीन् विन्यस्य[1] कोणेष्वग्न्यादीन् स्थापयेत् । इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः । कुबेरश्च सुवर्णाभो वह्निश्चैव[2] सुवर्णभः । तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते । ईशानस्तु भवेद्रक्त एवं ध्यायेत् क्रमादिमान् । तत इन्द्राग्न्योर्मध्ये धरादीनष्टौ वसूनावाहयेत् । इन्द्रैशानयोर्धात्रादीन् द्वादशादित्यान् । अग्नियमयोर्वीरभद्रादीनेकादश रुद्रान् । यमनिर्ऋत्योर्ब्राह्म्याद्याः सप्त मातृः सगणाः । निर्ऋतिवरुणयोर्गणेशम् । वरुणवाय्वोर्गगनादीनष्टौ मरुतः । घटस्योत्तरे दुर्गामावाहयेत् । ततो धर्मं षोडशोपचारैः संपूज्येन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्चतुर्थ्यन्तैर्नमोन्तैः पूजां पदार्थानुसमयेन कृत्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यानि दत्त्वा इन्द्रादीनां गन्धादीनि पूर्ववद् दद्यात् । घटपूजायां गन्धपुष्पाणि रक्तानि यथालाभमन्यत्र । ततश्चत्वार ऋत्विजश्चतसृषु दिक्षु लौकिकेऽग्नौ प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य समिदाज्यचरून् प्रत्येकमष्टोत्तरं शतं जुहुयुः । यत्तु **गौडमीमांसक** आह **दिव्यतत्त्वे** आज्यपायससमिधो मिलिता होतव्या लाघवादिति । तन्न । चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः । आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥ इति प्रत्येकं तृतीयाश्रवणेन निरपेक्षसाधनत्वावगमात् । ततोऽभियुक्तमर्थं मन्त्रसहितं पत्रे लिखित्वा तत्पत्रं संशोध्य शोध्य[3]शिरोगतं कुर्यात् । मन्त्रस्तु

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥

इदं च धर्मावाहनादिशिरःपत्रारोपणान्तमनुष्ठानकाण्डं सर्वदिव्येषु योज्यम् । ततः प्राड्विवाको घटमामन्त्रयेदित्थम् । त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् । धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ॥ धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे ॥ त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च । त्वमेव सर्वं जानीषे न विदुर्यानि मानवाः ॥ व्यवहाराभिशस्तोयं मानुषः शुद्धिमिच्छति । तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ इति । शोध्योपि–त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता । तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ यद्यहं पापकृन्मातस्ततो मां त्वमधो नय । शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ ततः प्राड्विवाकः शिरोगतपत्रकं शोध्यं यथास्थानं यथासंनिवेशं घटमारोप्य पलपञ्चकं[4] यावत्तथैव स्थापयेत्[5] । तत्काले शुद्धिपरीक्षार्थं विशिष्टा ब्राह्मणा राज्ञा नियोक्तव्याः । ते च शुद्ध्यशुद्धी राज्ञे कथयेयुः । शोध्यस्य लघुताजाड्यसाम्येषु

---

१ B reads विन्यसेत्

२ B reads अग्निश्चापि for वह्निश्चैव

३ B omits शोध्य

४ B विनाडीपञ्चकं for पलपञ्चकम्

५ B adds after this दशगुर्वक्षरोच्चारणकालः प्राणः षट् प्राणा विनाडी । तत्कालपरीक्षां च ज्योतिःशास्त्राभिज्ञः कुर्यात् ।

प्रतिमानतः । ज्ञेयाः क्रमेण निर्दोषबहुदोषाल्पदोषताः ॥ बहुत्वमसकृन्मत्याऽमत्या कर्तृत्वमन्यथा । बह्वल्पत्वे पुनर्दण्डप्रायश्चित्तोपयोगिनी । अदृश्यहेतावक्षादेर्भङ्गे ज्ञेया सदोषता । दृश्यहेतौ पुनः शोध्यं घटमारोप्य शोधयेत् । अक्षः पादस्तम्भयोरुपरिनिविष्टस्तुलाधारपट्टः । तत ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिस्तोषयेत् । यदा तूक्तलक्षणं घटं तथैव स्थापयितुमिच्छा तदा—विशालामुच्छ्रितां शुभ्रां घटशालां तु कारयेत् । यत्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसैः ॥ तत्रैव लोकपालादीन् सर्वदिक्षु निवेशयेत् । त्रिसंध्यं पूजयेच्चैनान्गन्धमाल्यानुलेपनैः । कपाटबीजसंयुक्तां परिचारकरक्षिताम् ॥ मृत्पानीयाभिसंयुक्तामशून्यां कारयेन्नृपः । **इति घटदिव्यविधिः ।**

**अथाग्निविधिः ।** पूर्वेद्युर्भूशुद्धिं विधायापरेद्युर्नवमण्डलानि कार्याणि । तत्राद्यं षोडशाङ्गुलं विधायाग्रे द्वात्रिंशदङ्गुलं भूभागं द्विधा विभज्य द्वितीयभागे गन्तृपदप्रमाणं द्वितीयं मण्डलं कार्यम् । अवशिष्टमन्तरालं भवति । एवमेव तृतीयाद्यष्टमपर्यन्तमन्तरालसहितं निर्वर्त्याग्रे षोडशाङ्गुलमन्तरालं मुक्त्वा नवममपरिमिताङ्गुलप्रमाणं कार्यम् । तथा चाष्टानां मण्डलानामन्तरालानां च मिलित्वाङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं संपद्यते । तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः । प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥ हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥ वितस्त्याद्युत्तरत्रोपयोक्ष्यते । ततः पश्चिमादिषु नवसु मण्डलेष्वधिदेवताः क्रमेणाग्निं वरुणं वायुं यममिन्द्रं कुबेरं सोमं सवितारं सर्वदेवताश्च संपूज्य मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधायाग्नये पावकाय स्वाहेत्याज्येनाष्टोत्तरशतं जुहुयात्प्राड्विवाकः शान्त्यर्थम् । ततस्तस्मिन्नग्नावसरैर्हितं[1] वृत्तं श्लक्ष्णमष्टाङ्गुलायामं पञ्चाशत्पलसंमितमयःपिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादिहवनान्तं घटविध्युक्तमनुष्ठानकाण्डं कृत्वा तृतीये तापे वर्तमानेयःपिण्डस्थमग्निमभिमन्त्रयेदेभिर्मन्त्रैः प्राड्विवाकः । त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे । त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥ जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् । पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे[2] ॥ पापेषु दर्शयात्मानमर्चिष्मान्भव पावक । अथवा शुद्धभावेषु शुद्धो भव हुताशन ॥ त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् । त्वमेव देव जानीषे न विदुर्यानि मानवाः । व्यवहाराभिशस्तोयं मानुषः शुद्धिमिच्छति । तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ इति । लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः संताप्योदके निक्षिप्य पुनः संतापनं तृतीयस्तापः । एवमभिमन्त्रितं सुतप्तमग्निवर्णमयःपिण्डं सन्देशेन (सन्दंशेन?) गृहीत्वा प्राड्विवाक उपोषितस्य स्नातस्यार्द्रवाससः शिरोबद्धप्रतिज्ञापत्रस्य पश्चिमे मण्डले तिष्ठतो दिव्यकर्तुः पुरत आनीय—त्वमग्ने सर्वभूतानामन्तश्चरसि पावक । साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥ इति दिव्यकर्त्राभिम-

---

१ A ०वत्सरहितं

२ A उच्यते

ग्नितस्य कृतसंस्कारयोर्हस्तयोर्निक्षिपेत् । कृतसंस्कारयोर्व्रीहीन्मर्दयित्वाञ्जलीकृतयोस्ति-लकालव्रणकिणादिस्थानेष्वलक्तकरसादिनाङ्कयित्वा सप्ताश्वत्थपत्राण्यलाभेर्कपत्राणि सप्तशमीपत्राणि सप्तदूर्वापत्राणि अक्षतान् दध्यक्ताक्षतान् पुष्पाणि च विन्यस्य सप्तभिः शुक्रसूत्रैः सप्तकृत्वो वेष्टितयोः । ततो दिव्यकर्ता द्वितीयादीन्यष्टमान्तानि मण्डलेष्वेव पदं निक्षिपन् सप्त पदानि शनैर्गत्वाञ्जलिस्थमयःपिण्डं नवमे निक्षिपेत् । ततः पुनः कराभ्यां व्रीहीन् संघृष्यादग्धहस्तश्चेच्छुद्धो भवति । संत्रासात् प्रस्खलन् हस्ताभ्यामन्यत्र दह्यमानोप्यशुद्धो न भवति । यदा तु गच्छतो नवममण्डलादर्वागेवायःपिण्डः प्रपतति तदा पुनर्हरेत् । **इत्यग्निदिव्यविधिः ।**

**अथोदकविधिः ।** जलस्थानं नदीसागरह्रददेवखातसरस्तडागादिस्थिरतोयं योज्यम् । अल्पमाहार्यं तृणशैवालोर्मिपङ्कग्राहजलूकमत्स्यादियुक्तं शीघ्रवेगमित्यादि वर्ज्यम् । तत्र नाभिदघ्ने जले यज्ञियवृक्षोद्भवा धर्मस्थूणा कार्या । तत्संनिधौ पश्चिमतीर-देशे शोध्यकर्णोच्छ्रितं तोरणं कार्यम् । तत्समीपे षडुत्तरं शताङ्गुलं वैणवं धनुरनायसाग्रा वैणवास्त्रयः शराश्च स्थाप्याः । तोरणात्सार्धशतहस्तमिते सुदेशे लक्ष्यं स्थाप्यम् । ततः सशरं धनुः श्वेतगन्धमाल्यादिभिः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मावाहनादि हवनान्तं पूर्वोक्तं निर्वर्त्य शोध्यशिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाको जलमभिमन्त्रयेदेवम् । तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् । शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥ अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे । इति । ततः शोध्योपि-सत्येन माभिरक्ष त्वं वरुणेत्यभिमन्त्रयेत् । ततोवष्टब्धधर्मस्थूणस्य प्राङ्मुखस्य नाभिदघ्नोदकावस्थितस्य बलीयसः पुरुषस्य समीपं गच्छेच्छोध्यः । ततो धनुःस्थानात् क्षत्रियस्तद्वृत्तिर्ब्राह्मणो वाऽनायसाग्रान् त्रीन् शरान् लक्ष्यं प्रति सुदृढं क्षिपेत् । तत एकस्मिञ्जविनि पुरुषे मध्यमं शरं गृहीत्वा तस्य प्रसर्पणस्थानं विहाय पतनस्थाने स्थिते सत्यनेन जविना शरमोक्षस्थाने तोरणमूले स्थातव्यम् । जवी च पञ्चाशतो धावकानां मध्ये जवाधिकः । ततस्तोरणमूलस्थितेन प्राड्विवाकेन करतालिकात्रये दत्ते तृतीयकर-तालिकासमकालमेव शोध्यतोरणमूलस्थजविभ्यां मज्जनद्रुततरगमने कार्ये । मज्जनं चावष्टब्धधर्मस्थूणस्योरू गृहीत्वा कार्यम् । ततस्तस्मिन्मध्यमशरपातस्थानं गते तत्र स्थितः शरग्राही द्रुततरं तोरणमूलं प्राप्य जलान्तर्गतं शोध्यं यदि पश्यति तदासौ शुद्धः ।

१ B सप्त सप्तान्यश्वत्थ०
२ B reads शुक्ल for शुक्र
३ B reads संघृष्य दग्ध०
४ B reads गच्छतोष्टममण्ड०
५ B reads जलूका for जलूक
६ A संलज्य for संपूज्य
७ B तद्वृत्तिर्ब्राह्मणो वा तापसो वा त्रीन्

शिरोमात्रदर्शनेपि शुद्धो न कर्णाद्यङ्गान्तरदर्शने निमज्जनस्थानादन्यत्र[1] गमने वा । इत्युदकदिव्यविधिः ।

अथ विषविधिः । विषं वत्सनाभं शृङ्गभवं हिमशैलजं वा ग्राह्यम् । इतोन्यत्कालकूटालाबुभूमिजादि जीर्णभ्रष्टमिश्रितादि विकृतं च वर्ज्यम् । गन्धवर्णरसादिगुणयुक्तं परीक्ष्य कुहकमणिमन्त्रौषधिप्रभृतिभ्यः संरक्ष्य प्रयोज्यम् । शोध्यश्च त्रिरात्रं पञ्चरात्रं वा राज्ञा स्वपुरुषाधिष्ठितः संरक्षणीयः । हेमन्तशिशिरयोर्वसन्ते च विषस्य सप्तयवा मात्रा देया शरदि षड्यवा वर्षासु चतुर्यवा । तत्र प्राड्विवाकः सोपवासो महादेवं संपूज्य तत्पुरतो विषमवस्थाप्य धर्मावाहनादि हवनान्तं पूर्वोक्तं कृत्वा पत्रं शोध्यशिरसि बद्ध्वा विषमभिमन्त्रयेदेवम् । त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् । पापानां दर्शयात्मानं शुद्धानाममृतं भव । मृत्युमूर्तो विष त्वं हि ब्रह्मणा परिनिर्मितः । त्रायस्वैनं नरं पापात्सत्येनास्यामृतं भव ॥ इति । एवमभिमन्त्र्य विषं त्रिंशद्गुणघृतप्लुतं दक्षिणाभिमुखाय शोध्याय प्राङ्मुख उदङ्मुखो वा दद्यात् । शोध्यस्तु-त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः । त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥ इति अभिमन्त्र्य भक्षयेत् । ततः करतालिकाशतपञ्चकं यावदल्पमात्रायां तु दिनान्तं यावत्प्रतीक्षणीयः शोध्यः । अनन्तरं चिकित्सनीयः । तावति काले विषं वेगैर्विना जीर्यति चेच्छुद्धः । त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणां धातूनां परस्परप्राप्तिर्वेगः । स सप्तधा विषतन्त्रे[2] । वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेगः पञ्चमोसौ नयनविवशतां कण्ठभङ्गं च हिक्कां षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥ इति । इति विषविधिः ।

सूर्यदुर्गाद्युग्र[3]देवतास्थापनाहृतमुदकं कोशः । सविस्रम्भे संधिकार्ये सर्वशङ्कासु च दातव्यः । सोपवासस्यार्द्रवासस आस्तिकस्याव्यसनिनश्च[4] शोध्यस्य देयः । न तु मद्यस्त्रीव्यसनिकितवनास्तिकमहापातकिनिर्धर्मकृतघ्नक्लीबप्रतिलोमजकैवर्तानाम्[5] । यस्य देवस्य यो भक्तस्तदभिषेकजलं तं पाययेत् । सर्वत्र समभावे त्वादित्यस्य ब्राह्मणवर्जम् । तस्यान्यदेवतोदकम्[6] । चौरान् शस्त्रोपजीविनश्च दुर्गायाः । तत्र दुर्गायाः शूलं स्नाप्यम् । आदित्यस्य मण्डलमन्येषां देवतानामायुधानि । अथातो गोमयेन मण्डलं कृत्वा तत्र शोध्यमादित्याभिमुखं स्थापयित्वा धर्मावाहनादि होमान्तं[7] शोध्यशिरसि प्रतिज्ञापत्रं निवेश्योग्रदेवताः समभ्यर्च्य स्नाप्य तदुदकमाहृत्याभिमन्त्रयेत् प्राड्विवाक इत्थम् ।

१ B निमज्जनादन्यत्र.
२ B adds उक्तः after विषतन्त्रे
३ A reads सूर्याद्युग्र०
४ B अस्तीकस्य व्यसनिनश्च
५ B क्लीबकुत्सितप्रतिलोमकैः
६ B तस्य त्वन्यदेव०
७ B होमान्ते कृते

तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम्। शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा। अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे॥ इति। ततस्तत्तोयं पात्रान्तरे कृत्वा शोध्येन सत्येन माभिरक्ष त्वं वरुणेत्यभिमन्त्रितं प्रसृतित्रयं पाययेत्। ततश्चतुर्दशाद्दह्नः पूर्वं राजिकं दैविकं वा महद्व्यसनं न चेच्छुद्धो महाभियोगेषु पञ्चदशादावह्नि महति व्यसनेपि नाशुद्धः। अल्पाभियोगेषु तु महाभियोगोक्तद्रव्यं त्रिधा विभज्य क्रमेण त्रीणि सप्त द्वादश वाहोरात्राणि व्यसनावधित्वेन योज्यानि। **इति कोशविधिः।**

**अथ तण्डुलविधिः।** प्राड्विवाकः शुक्लशालितण्डुलान्मृन्मये भाजने निधायादित्यस्याग्रतस्तत्स्नानोदकेन संमिश्रान्कृत्वा रात्रौ तत्रैव वासयित्वा पूर्वाह्णे धर्मावाहनादि प्रतिज्ञापत्रारोपणान्तं विधायोपोषितं प्राङ्मुखं स्नातं शोध्यं तण्डुलान् भक्षयित्वा पिप्पलपत्रे तदभावे भूर्जपत्रे वा निष्ठीवयेत्। लोहितं दृश्यते यस्य हनुस्तालु च शीर्यते। गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत्। **इति तण्डुलविधिः।**

**अथ तप्तमाषविधिः।** सौवर्णं राजतं ताम्रं मृन्मयं वा षोडशाङ्गुलं चतुरङ्गुलखातं वर्तुलं पात्रं विंशत्या पलैर्मिताभ्यां पूरयित्वा सुतप्तयोस्तयोः सुवर्णमाषं निक्षिप्य धर्मावाहनादि विधाय घृतमभिमन्त्रयेत् प्राड्विवाक इत्थम्। परं पवित्रममृतं घृत त्वं यज्ञकर्मसु। दह पावक पापं त्वं हिमशीतं शुचौ भव॥ इति। शोध्योपि-त्वमग्ने सर्वभूतानामन्तश्चरसि पावक। साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम॥ इति। ततः शोध्योङ्गुष्ठाङ्गुलियोगेन तप्तमाषं पात्रादुद्धरेत्। कराग्रं यो न धुनुयाद् विस्फोटो वा न जायते। शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः॥ उद्धृते माषे दैवात्पुनः पात्रे पतितेपि नाशुद्धः। एवं वा सौवर्णे राजते ताम्रे आयसे मृन्मये वा पात्रे गव्यं घृतमाधाय संताप्य तत्र सौवर्णीं राजतीं ताम्रीमायसीं वा सलिलेन धौतां मुद्रिकां निक्षिप्य धर्मावाहनादि विधायार्द्रपत्रप्रक्षेपणसघोषचुरुकारं घृततापं परीक्ष्य प्राड्विवाको घृतमभिमन्त्रयेदुक्तेन मन्त्रेण। शोध्यस्तूक्तमन्त्रेणाभिमन्त्र्य प्रदेशिन्या मुद्रिकां गृह्णीयात्। स्फोटाद्यभावे शुद्धः। **इति तप्तमाषविधिः।**

**अथ धर्माधर्मविधिः।** स साहसपातकार्थाभियोगादौ प्रयोज्यः। राजतं धर्ममायसं सैसं वाधर्मं कृत्वा भूर्जपत्रे पटे वा सितासितौ धर्माधर्मौ लिखित्वा पञ्चगव्येनाभ्युक्ष्य गन्धादिभिः सितपुष्पैर्धर्ममसितपुष्पैरधर्मं संपूज्य गोमयपिण्डयोर्मृत्पिण्डयोर्वा

---

१ A राजिकदैविकं महद्व्यसनं न चेत्
२ B ०योगोक्तं द्रव्यम्
३ A omits सप्त...रात्राणि
४ B omits पात्रं
५ B reads सुतप्ते तस्मिन्
६ B omits पात्रे
७ B कृत्वा यद्वा भूर्जपत्रे
८ A omits धर्ममसितपुष्पैरधर्मम्

निधायोपलिप्ते सुदेशेनुपहतमृद्भाण्डे उपलक्ष्यमाणौ स्थापयित्वा धर्मावाहनादि विधाय ग्राहयेत् प्राड्विवाकः। शोध्यस्तु—यदि पापविमुक्तोहं धर्मस्त्वायातु मे करे-इति अभिमन्त्र्यैकं गृह्णीयात्। धर्मे गृहीते शुद्धोऽधर्मे त्वशुद्धः। **इति धर्माधर्मविधिः।**

**अथ प्रकीर्णकविधिः।** निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम्। त्रिकादर्वाक् पुण्यं स्यात् कोशपानं ततः परम्॥ सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥ इत्यादयः शपथा ग्राह्याः। अत्र कार्यादिवैशिष्ट्यवशेन पूर्वोक्त[1]त्रिरात्रप्रभृतिकालौ[2] राजिकदैविकव्यसनावै[3]धितया योर्ज्यौः[4] शुद्ध्यशुद्धिविवेकाय। एवं दिव्यप्रयोगेषु शुद्धः शतार्धं दाप्यो राज्ञे। अशुद्धस्तु विषे सहस्रं तोये षट्शतानि हुताशे पञ्च तुलायां चत्वारि कोशे त्रीणि तण्डुले द्वे शते तप्तमाष एकशतं दण्डं दाप्यः। अन्येषु यथोचितं दण्डं दाप्यः। अयं दिव्यनिबन्धनो दण्डः प्रागुक्तापलापदण्डेन समुच्चीयते। एतदनुष्ठानै[5]पद्धतिस्तु भट्टकृता द्रष्टव्या। **इति दिव्यनिरूपणम्।**

**अथ सुवर्णमानादि।** तत्र जालसूर्यमरीचिस्थं रजस्त्रसरेणुः। तेष्टौ लिक्षा तास्तिस्रो मध्यमो राजसर्षपः। ते त्रयो मध्यमो गौरसर्षपः। ते षट् यवो मध्यमः। ते त्रयः कृष्णलः। ते पञ्च माषः। ते षोडश सुवर्णः। ते चत्वारि पञ्च वा पलम्। द्वौ कृष्णलौ रूप्यमाषः। ते षोडश धरणं पुराण इत्यपि। ते दश शतमानं रूप्यपलं च। चत्वारः सुवर्णा निष्कम्। कर्षोन्मितस्ताम्रिकः पणः। कर्षः सुवर्णपलचतुर्थांशः। प[6]णानामशीत्यधिकं सहस्रमुत्तमसाहसो दण्डः। चत्वारिंशदधिका पञ्चशती मध्यमसाहसः। सप्तत्यधिकशतद्वयी प्रथमसाहसोधमसाहस इत्यपि। यद्वा। सहस्रं पञ्चशती पञ्चाशदुत्तरशतद्वयीत्येवोत्तमादयः। अयं पक्षोऽमतिपूर्वापराधे योज्यः। सर्वत्र दण्डदानं राज्ञे धनदानं जयिने। इ[7]ति **व्यवहारमातृकाप्रकरणम्।**

अथास्य व्यवहारस्य पदान्यष्टादश क्रमात्। निरूप्यन्ते तद्विभागै[8]स्तत्तत्प्रकरणैः स्फुटः॥ तत्र ऋणादानप्रकरणम्। साधौ प्रयोगे प्रयुक्तस्य द्रव्यस्याशीतितमं भागं वृद्धिमादद्यान्मासि मास्युत्तमर्णः। अनाधौ तु द्विकं त्रिकं चतुष्कं पञ्चकं शतं प्रतिमासं क्रमाद् ब्राह्मणक्षत्रियवैश्यशूद्रेभ्यः। इयं च प्रतिमासं गृह्यमाणा वृद्धिः कालिका नाम।

---

१ B reads पूर्वोक्ते
२ B reads ०प्रभृतिः कालः
३ A व्यसनविधितया
४ B योज्यः
५ B अनुष्ठानार्थं पद्धति०
६ A पलानामशी०
७ B omits इति...प्रकरणम्
८ B तदुद्देशः for तद्विभागः

दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा तु कायिका । वृद्धेरपि वृद्धिश्चक्रवृद्धिर्नाम । कान्तारगेभ्यो दशकं शतमादद्यात् । समुद्रगेभ्यस्तु विंशकं शतम् । यद्वा साधावनाधौ वा प्रयोगे ब्राह्मणादिभ्यस्तदभ्युपगतां वृद्धिमादद्युः सर्वा ज्ञातयः । सेयं कारिता नाम । प्रतिदत्ता[1] नाम कारितापि संवत्सरादूर्ध्वं[2] वृद्धिरस्ति । यदा तु याचितकं गृहीत्वा तददत्त्वैव देशान्तरं गच्छेत्तदा तद्धनं संवत्सरादूर्ध्वं वर्धते । यदि स्वामिना याचितोप्यदत्त्वा गच्छेत्तदा मासत्रयादूर्ध्वम् । यत्र[3] स्वदेशस्थ एव याचितो न ददाति स पावनकाला-दारभ्य स्वामिने वृद्धिं दाप्यो राज्ञा । पण्यमूल्यं भृतिर्न्यासो दण्डो वृथादानमाक्षिकपण इत्येतेष्वकारिता[4] वृद्धिर्नास्ति । धूर्तबन्दिमल्लकुवैद्यकितवशठचारणचौरादिभ्यः प्रतिश्रुतं वृथादानम् । पशूनां स्त्रीणां च संततिरेव[5] वृद्धिः । वृद्धिग्रहणमन्तरेण चिरकालावस्थि-तस्य स्वकृतया वृद्ध्या वर्धमानस्य हिरण्यस्य द्विगुणा वृद्धिः परा काष्ठा नाधिकास्ति । धान्यस्य त्रिगुणा वस्त्रस्य चतुर्गुणा । तैलादिरसस्य पुष्पमूलफलानां चाष्टगुणा । यद्वा रसस्य त्रिगुणा धान्यपुष्पमूलमेषोर्णाचमरीकेशबलीवर्दतुरगादीनां पञ्चगुणा । पुरुषान्तर-संक्रमणेन तस्मिन्नेव वा पुरुषे रेकसेकाभ्यां प्रयोगान्तरकरणे[6] सुवर्णादिद्वैगुण्याद्यतिक्रम्य पूर्ववद्वर्धत एव । अधमर्णेनाङ्गीकृतमर्थं व्यवहारच्छलाभोजनप्रीतियुक्तसत्यवचनबलैः साधयेदुत्तमर्णः । अन्यथा साधयन्निवार्यो राज्ञा साध्यं दाप्यं[7] (दाप्य?)स्तत्समं दण्डं च दाप्यः । प्रपन्नं साध्यमानोधमर्णो यदि साधकाभियोगार्थं राजानमभिगच्छेत् तदा शक्त्यनुसारेण दण्डं दाप्यः[8] । तत्र विप्रश्चेत्सान्त्वेनैव दाप्यः । देशाचारतोन्यो दाप्यः । दुष्टः संपीड्य दाप्यः । रिक्थी सुहृद्वा छलेन दाप्यः । बहुषूत्तमर्णेषु समान-जातीयेषु युगपत्प्राप्तेषु धनग्रहणक्रमेणैव दाप्यः । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण । यदि तूत्तमर्णोर्थसाधनाशक्तो[9] राजसाधितार्थो भवति तदा साधितस्यार्थस्य विंशतितमं भागं भृतिं गृह्णीयाद्राजोत्तमर्णात् । अधमर्णात्तु दशममंशं दण्डम् । निर्धनमधमर्णं सवर्णादिकं तत्कुटुम्बाविरोधेनानुरूपं कारयेदृणनिवृत्त्यर्थम् । उत्तमवर्णं तु शनैर्यथासंभव-मृणमेव दापयेत् । दीयमानस्तूत्तमर्णो वृद्धिलोभादिना न गृह्णाति चेन्मध्यस्थहस्ते स्थापितं सत् स्थापनादूर्ध्वं न वर्धते । स्थापितमपि याच्यमानो न ददाति चेत्पूर्ववद्वर्धत एव । अविभक्तेषु येन केनचित् कुटुम्बार्थे कृतमृणं कुटुम्बी दद्यात् । तस्मिन् प्रेते प्रोषिते

---

१ B reads प्रीतिदत्ता

२ B reads संवत्सरार्धादूर्ध्ववृद्धिरस्ति

३ B reads यस्तु

४ A reads एतेषु कारिता

५ A संततिरिव

६ B ०योगान्तरीकरणे तु

७ A reads दाप्य तत्समं दण्डं दाप्यः

८ B reads दण्ड्यो धनं स दाप्यः

९ B reads तूत्तमर्णः प्रपन्नार्थसाधनाशक्तो राज्ञा साधिता०

वा रिक्थिनः सर्वे दद्युः। कुटुम्बादृते पुत्रेण कृतं माता पिता वा न दद्यात्। भार्याकृतं[1] पतिर्न दद्यात् कुटुम्बार्थादृते। मुमूर्षतः प्रवत्स्यतो वा पत्युरीज्ञयाज्ञीकृतं[2] पत्या सह कृतं वर्णं भर्त्रभावे भार्या दद्यादपुत्रा चेत्। स्वकृतं तु दद्यादेव। सुरा-काम-द्यूत-दण्ड-शुल्क-वृथादाननिमित्तं तु प्रपन्नं पत्या सह कृतमपि नैव दद्यात्। पितरि दातव्यमृणमदत्त्वा दूरदेशं गते तद्धनाभावेपि रिक्थग्रहणयोग्येन पुत्रेण सवृद्धिकमवश्यं दातव्यं विंशाद्वत्स-[3]रादूर्ध्वं नार्वाक्। प्रेतेऽचिकित्सनीयव्याध्यभिभूते दद्यात्षोडशवर्षाधिकवयस्कश्चेन्नान्यथा।[4] पुत्राभावे पौत्रेण मूलमात्रं देयं न वृद्धिः। प्रपौत्रेण तु अगृहीतधनेन न देयम्। बन्धकं त्वृणापाकरणेन पौत्रादिनाप्याहर्तव्यम्। पुत्रादयो विभक्ताश्चेत्सर्वेपि स्वांशेन दद्युः। अविभक्ताः संभूय। गुणप्रधानभावेन वर्तमानानां प्रधानभूत एव दद्यात्। सुराकामादि-निमित्तं त्वदेयमेव पुत्रादेः। पुत्रपौत्रप्रपौत्राभावे भ्रात्रादयो[5] दद्युर्यदि रिक्थं गृह्णी-युर्नान्यथा। भ्रात्रादिरिक्थग्राह्यभावे[6] त्रिविधो योषिद्ग्राहो दद्यात्। त्रिविधः। कन्यैवा-क्षतयोनिर्या पाणिग्रहणदूषिता। पुनर्भूः प्रथमा सोक्ता पुनः संस्कारकर्मणा॥ इति पुनर्भूग्राही। तथा। प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या। तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता॥ इति स्वैरिणीग्राही। या तु सप्रधानैव (सप्रधनैव?) स्त्री सापत्या वान्यमाश्रयेत्। सोस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम्॥ इति सधनसापत्यस्त्रीहारी च। त्रिविधयोषिद्ग्राह्यभावे पुत्रेण दातव्यमित्युक्तं द्रष्टव्यम्। पुत्राभावे निर्धननिर-पत्ययोषिद्ग्राहो दद्यात्। एते रिक्थियोषिद्ग्राहपुत्रस्त्रीमात्रहारिण उत्तमर्णतत्पुत्रादितद्रि-क्थग्रहणयोग्यद्विजानां पूर्वपूर्वाभावे[7] उत्तरोत्तराय दद्युः। द्विजाभावेऽगाधे जले निक्षि-पेयुः। भ्रातॄणां दम्पत्योः पितापुत्रयोश्च ऋणं प्रतिभाव्यं साक्ष्यं च न कार्यं विभागात्प्राक् परस्परानुमतिं विनेत्यादि। **ऋणप्रयोगादिविधिः।**

**अथ प्रतिभूविधिः।** प्रतिभूस्त्रिविधो यथैतद्दर्शनापेक्षायामहमेनं दर्शयिष्या-मीति दर्शनप्रतिभूरेकः। मद्विश्वासेनास्य धनं प्रयच्छेति प्रत्ययप्रतिभूरन्यः। यद्ययं न ददाति तदाहमेव दास्यामीति दानप्रतिभूरपरः। तत्र स्वामी तदधिकृतः शत्रुर्निरुद्धो दण्डितोभिशस्तो रिक्थी मित्रं नैष्ठिकब्रह्मचारी राजकार्यनियुक्तः[8] पणजितो[9] धनदण्डदा-नाशक्तो जीवत्पितृक इच्छाप्रवर्तकोऽविज्ञात इत्येते प्रतिभुवो न कार्याः। तत्र दर्शनप्रति-

१ B भार्यया कृतम्
२ B पत्युर्नियोगेन प्रपन्नम्
३ B विंशात्संवत्सरादूर्ध्वं नार्वाक्
४ A omits षोडश...न्यथा
५ B पितृव्यादयः for भ्रात्रादयः
६ B reads पितृव्यादि for भ्रात्रादि°
७ B पूर्वाभावे
८ B राजा कार्यं (राज्ञा कार्ये?)
९ B प्रव्रजितः for पणजितः

भूरुक्तकालादूर्ध्वं पक्षत्रयमध्ये न दर्शयति चेत्प्रस्तुतं धनं दाप्यः प्रत्ययप्रतिभूस्तु विश्वासव्यभिचारे। बन्धकमादाय प्रतिभुवौ चेत् बन्धकधनात्तत्पुत्रा अपि दाप्या नान्यथा। दानप्रतिभुवस्तु पुत्रा अपि दाप्या मूल्यमात्रं न वृद्धिम्। पौत्रास्तु न दाप्या[1] अगृहीतधनाश्चेत्। एकत्रानेकप्रतिभुवश्चेद्विभज्य स्वांशेन[2] दद्युः। प्रत्येकं कृत्स्नदानाय व्यवस्थितेषु बहुषु तु धनिकेच्छया कृत्स्नं दाप्यो मृतश्चेत्स्वपित्रंशमवृद्धिकं दाप्यः। प्रतिभूस्तत्पुत्रो वा धनिकेनोपपीड्य सर्वजनसमक्षं यद् द्रव्यं दापितस्तत्तस्मै प्रतिदातव्यमधमर्णेन परमकाष्ठया वृद्ध्या सहेत्यादि **प्रतिभूविधिः।**

**अथाधिविधिः।** आधिर्द्विविधः। कृतकालोऽकृतकालश्च। पुनश्चैकैकशो द्विविधः। रक्ष्यो भोग्यश्च। अमुष्मिन्काले मया न मोच्यते चेत्तवैव भविष्यति—इत्येवं निरूपितकालः कृतकालः। अनिरूपितकालोऽकृतकालः। तत्र कृतकालौ गोप्यभोग्यावाधी तत्कालातिक्रमे सत्यर्वाक् चतुर्दशादह्नो न मोच्येते[3] चेन्नश्यत एव। धनप्रयोक्तुः स्वत्वापत्तिपर्यवसायी अधमर्णस्वत्वापगमो नाशः। अकृतकालस्तु फलभोग्यो[4] न नश्यति। गोप्यस्तु अकृतकालः स्वकृतया वृद्ध्या कालातिक्रमेण[5] द्विगुणीभूते धने चतुर्दशादह्नोर्वाङ्न मोच्यते चेन्नश्यति। चरित्रेण धनिनोधमर्णस्य वा स्वच्छाशयत्वेन प्रयुक्तधनादप्यधिकोल्पः समो वा कृत आधिश्चरित्राधिः। चरित्रमेव गङ्गास्नानाग्निहोत्राद्याधिश्चरित्राधिरिति वा। सत्यङ्कारेण द्विगुणीभूतेपि द्रव्ये मया तावद्द्रव्यमेव दातव्यं न त्वाधिनाश इत्याद्या[6](?) करणदशायां संवादेन कृत आधिः सत्यङ्काराधिस्तावेतौ द्विगुणीभूतेपि धने नश्यतः[7]। गोप्याधेः स्वल्पेप्युपभोगे महत्यपि वृद्धिर्हातव्या। नष्टश्छिद्रादिविकृतिं गतश्चेत्पूर्ववत्कृत्वापि देयः। भोग्याधिरपि व्यवहाराक्षमत्वं गमितश्चेद्वृद्धिसद्भावे सा हातव्या। नष्टश्चेत्कृत्वापि देयः। आत्यन्तिकनाशं प्रापितो देयो मूल्यादिद्वारेण। तदा सवृद्धिकं मूलं ग्राह्यम्। विनष्टाधेर्मूलमपि[8] हातव्यम्। दैवोपप्लवात्स्वापराधरहिताच्च राजोपप्लवाद्विनष्टश्चेन्न देयः। सवृद्धिकं मूलं तु ग्राह्यमाध्यन्तरं वा। आधेरुभयविधस्याप्युपभोगादेव ग्रहणसिद्धिर्न तूद्देशसाक्षिलेख्यमात्रेण। स च प्रयत्नेन रक्ष्यमाण एवासारतां कालवशेन गतश्चेदन्यः कर्तव्यो धनं वा देयम्। धनदानायोपस्थितस्याधिं वृद्धिलोभेन स्थापयति चेच्चौरवद् दण्ड्यः। प्रयोक्तर्यसंनिहिते तदाप्तहस्ते सवृद्धिकं धनं निधाय स्वमाधिं गृह्णीयात्। प्रयोक्त्राप्तासंनिधावाधिविक्रयेण धनदित्सायां तत्काले तस्याधेर्मूलं परिकल्प्य धनिन्येव तमाधिं स्थापयेत्तदूर्ध्वं वृद्धिर्नास्ति यावद्धनग्रहणे-

---

१ B दाप्या एवागृही०

२ A स्वांशं for स्वांशेन

३ B मोच्यते

४ B ०कालस्तु पभोग्या न (स्तूपभोग्यो न?)

५ A क्रमे णीभूते (?)

६ B इत्यधिकरणदशायाम्

७ B नयनः

८ B मूलं विनष्टाद(दा?)धेर्मूलमपि

ऩाधिमोचनं तन्मूल्यद्रव्यप्रवेशनं वा। सत्यङ्कारादौ द्विगुणीभूते धने धारणिके[1](धमर्णिके?) चासंनिहिते ससाक्षिकमाधिं विक्रीय स्वं धनं गृह्णीयाद्धनी। सवृद्धिमूलर्णापाकरणार्थं कृतो भोग्य आधिस्तदुपभोगमुखेन स्वधने[2] प्रविष्टे मोक्तव्यो धनिना। अधिकोपभोगे तदपि प्रतिदेयम्। स एष (एव?) क्षयाधिः। वृद्धिमात्रापाकरणार्थं कृतस्तूत्कृष्टोपकृष्टो वा यावन्मूलदानमुपभुज्य मूलमात्रं गृहीत्वा मोक्तव्यः परस्परानुमतिराधीकरणदशायां चेत्। अन्यथोत्कृष्टो मूलमदत्त्वैव प्राह्योधमर्णेन। अपकृष्टस्तु मूलं वृद्धिशेषं च गृहीत्वा मोक्तव्य उत्तमर्णेन। वृद्धेरप्यधिकफल उत्कृष्टः। वृद्ध्यपर्याप्तोपकृष्टः। **इति ऋणादानप्रकरणम्।**

**अथोपनिधिः।** वस्तुरूपादिविशेषमनाख्याय विस्रम्भादन्यहस्ते रक्षणार्थमर्प्यमाणमुपनिधिः। स यत्र यथा स्थापितस्तेन तथैव प्रतिदेयः। ग्रहीत्रर्थेन सह नष्टमजिह्मकारितराजदैवतस्करोपप्लवनष्टे[3] चोपनिधिं स्थापयिता न दातव्यः। याच्यमानमदत्तं तूत्तरकालमेवंविधमपि स्वामिने मूल्यकल्पनया दाप्यस्तत्समं दण्डं च राज्ञे।

**अथ निक्षेपप्रकरणम्।** असंख्यातमविज्ञातं समुद्रं यन्निधीयते। तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः॥ तं यथादत्तमेव स्थापयिता दाप्यः। अजिह्मकारितदैवमानुषोपप्लवनष्टं तु न दाप्यः। स्वामिना याच्यमानं न[4] दत्तवांश्चेदेवंविधमपि दाप्यस्तत्समं दण्डं च। स्वाम्यनुज्ञां विना लाभार्थं प्रयोक्तोपभोक्ता वा लाभोपभोगानुरूपं दण्ड्यो निक्षेपं च सोदयं दाप्यः[5]। उपेक्षितं तु सममज्ञाननाशितं चतुर्थांशन्यूनं दाप्यः। द्वित्रैः परंपरया स्वामिने देहीति निहितमन्वाहितं, गृहस्वामिपरोक्षमेव तस्मै देयमिति तज्जनहस्ते प्रक्षिप्तं न्यस्तं, सुवर्णकारादिहस्ते कटकादिनिर्माणाय दत्तं शिल्पिन्यस्तं, परस्परं[6] हस्तेर्पितं प्रतिन्यस्तमित्येतेष्वन्वाहितादिषु निक्षेपोक्तं द्रष्टव्यम्। **इति निक्षेपप्रकरणम्।**

**अथ दायविभागः।** यद्धनं स्वामिसंबन्धादेवान्यस्य स्वं भवति स दायः। स च द्विविधः। सप्रतिबन्धोऽप्रतिबन्धश्च। तत्र पुत्राणां पौत्राणां च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं च स्वं भवतीत्यप्रतिबन्धो दायो रिक्थं च सः। पितृव्यभ्रात्रादीनां तु तत्पुत्रस्वामिनोः सद्भावः प्रतिबन्धस्तदभावे पितृव्यत्वेन भ्रातृत्वेन च स्वं भवतीति सप्रतिबन्धो दायः संविभागश्च सः। पुत्रादिष्वप्यूह्यम्। द्रव्यसमुदायविषयाणा-

---

१ A धने क्षणिके चास०

२ B omits स्वधने

३ B reads ०प्लुवनष्टं चोपनिधिं ग्रहा न दाप्यः

४ B omits न

५ After दाप्यः B adds प्रयुक्तसवृद्धिकमुपभुक्तम्

६ B परस्परस्य

अनेकस्वामिनां[1] स्वत्वस्य तदेकदेशेषु व्यवस्थापनं विभागः। स्वत्वं च[2] लोकप्रसिद्धिगम्यमेव। तदुपायाश्च लोकप्रसिद्धा एवेति[3] निष्टङ्कितं चैतन्मया स्वत्ववादे। ब्राह्मणक्षत्रियवैश्यशूद्राणां प्रतिग्रहविजयवाणिज्यशुश्रूषादयोऽसाधारणाः। साधारणाश्च रिक्थक्रयसंविभागपरिग्रहाधिगमादयः। अनन्यपूर्वस्य तृणकाष्ठादेः स्वीकारः परिग्रहो[4] निध्यादिना प्राप्तिरधिगमः। अत्र ब्राह्मणादीनामदृष्टार्थंप्रतिग्रहादिनियमातिक्रमेण शुश्रूषादिनार्जितेपि स्वत्वमस्त्येव परं तु प्रतिग्रहादिनियमातिक्रमे ब्राह्मणादिः प्रत्यवैति। चौर्यार्जितेपि तत्कृष्णं समुदाहृतमिति वचनात् स्वत्वमस्तीति प्राच्याः। तन्न। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो स्त्रियां धने–इति कोशात् धनमात्रवाचकत्वेनाप्युपपत्तेः कृष्णं समुदाहृतमिति स्वशब्दे चौर्यार्जिते स्वत्वकल्पनायां मानाभावात्। विभागात्प्राक् पितुरावश्यकेषु धर्मकृत्यप्रसाददानकुटुम्बभरणापद्विमोक्षादिषु स्थावरव्यतिरिक्तस्वार्जितद्रव्यस्य विनियोगे स्वातन्त्र्येणाधिकारोस्ति। पुत्रादेरनुमतिमात्रं[5] संभवे कार्यम्। पितृप्राप्तस्य पुत्रानुमत्यैव नान्यथा। स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्येणैव। पुत्रादिष्वनुज्ञादावसमर्थेषु तु सकलकुटुम्बव्यापिन्यामापदि तत्पोषणे चावश्यकधर्मेषु वा कर्तव्येष्वेकेनापि समर्थेन स्थावरस्य दानाधमनविक्रयाः कार्या इति। विभागश्च[6] पित्रर्जिते पितुरिच्छया कार्यः। यद्वा पित्रर्जितेपि दुर्व्यसनिनि निस्पृहे वा निवृत्तरमणे[7] वाधर्मवर्तिनि वा दीर्घरोगग्रस्ते वा मातरि विरजस्कायां वा पुत्रेच्छया यदि वा पित्रोरूर्ध्वम्। पितामहार्जिते तु यदा कदाचिदपि[8] पुत्रेच्छया॥ स द्विविधः समो विषमश्च। तयोः पितुरिच्छया विकल्पः। पितृक्रमायाते तु सम एव कार्यः। तत्र विषमस्तावदित्थम्। सर्वस्य विभोज्यस्य[9] विंशतितमं भागं सर्वद्रव्येभ्यः[10] श्रेष्ठं च श्रेष्ठाय। चत्वारिंशत्तमं भागं मध्यमं च मध्यमाय। अशीतितमं भागं कनिष्ठं च कनिष्ठाय। पत्नीभ्यः परिभाण्डं गृहेलंकारं वोद्धृत्यावशिष्टं समविभागवद्योज्यम्। सोयमुद्धारविभागः। तथान्योपि विषमो विभागः। पित्रोरूर्ध्वं ज्येष्ठस्य द्वावंशौ तदनन्तरजातस्य सार्धोंशस्तदनु जातानामेकैक इति। यद्वा सर्वं ज्येष्ठस्य तदुपजीवनमन्येषामिति। सर्वोप्ययमुद्धारविभागः कलौ वर्ज्यः। अथ समविभागप्रकृतिः। ब्राह्मणादीनां ब्राह्मण्यादिभार्योत्पन्नाश्चतुस्त्रिद्व्येकविधाः पुत्रास्तत्र ब्राह्मणः पिता ब्राह्मण्यादिपुत्रेभ्यः क्रमाच्चतुरस्त्रीन् द्वावेकं भागं दद्यात्। क्षत्रियः क्रमात् त्रीन् द्वावेकं वैश्यो द्वावेकं शूद्र एकम्।

१ B ०स्वामिनां तदेकदेशेषु
२ B omits च
३ B omits इति
४ B reads by oversight परिग्रहा नियमातिक्रमे (l. 6)
५ A अनुमितिमात्रम्
६ B विभागः पित्रर्जिते
७ B reads निवृत्तमरणे वा
८ B reads यदा कदापि
९ B omits विभाज्यस्य and भागम्
१० B adds after this सर्वद्रव्येभ्यः

कन्याभ्यश्च प्रीत्या किंचिन्मात्रं पत्नीभ्यश्च स्वस्वपुत्रांशसमं तासां श्वशुरेण भर्त्रा वा स्त्रीधनं न दत्तं पुत्रांशसमं भवति तावत्। स्वयं तु सवर्णापुत्रापेक्षया द्वौ भागौ स्वार्जितं चेत्, पितृप्राप्तस्य तु सवर्णापुत्रांशसममेव गृह्णीयात्। ब्राह्मणः पिता क्षत्रियापुत्रेभ्यः प्रतिग्रहलब्धां भुवं न दद्यात्। दत्तामपि ब्राह्मणीपुत्रा अपहरेयुः। क्रयादिलब्धां तु दद्यादेव। द्विजातयः शूद्रापुत्रेभ्यः कामपि न दद्युः। अविभक्तदशायां कियन्मात्रप्रसाददाने पूर्वोक्तं भागमपि न दद्युः। दास्यामुत्पादितस्य जीवनमात्रं दद्युरनुकूलश्चेन्नान्यथा। शूद्रैस्तु[1] दास्यामुत्पादिताय पुत्राय भागं दद्यादिच्छा चेत्। पितुरूर्ध्वं परिणीतायाः पुत्रास्तदभावे[2] दौहित्राः स्वांशार्धं दद्युः। एषामभावे दासीपुत्रः पित्र्यं कृत्स्नं गृह्णीयात्। ब्राह्मणादीनां पुत्रैः सह विभक्ते सति जातः पुत्रः पितुरूर्ध्वं तदीयमंशं विभागोत्तरकालार्जितद्रव्यसहितं कृत्स्नं गृह्णीयात्सवर्णश्चेत्। असवर्णस्तु स्वांशं[3]मेव दुहितुर्दौहित्र्या दौहित्रस्य वाभावे। विभक्तजान्तरसद्भावे संसृष्टसद्भावे वा तेन सह विभजेत्। विभक्तेन पुनरेकीभूतः संसृष्टः। पितृकृतोपि विभागोऽशास्त्रीयश्चेन्निवर्तेत एव। पितुरूर्ध्वं पुत्रा मातृभिर्भगिनीभिश्च सह विभजेरन्। तत्र पुत्राणां पत्नीनां च यथोक्तमेव। अपुत्रपत्न्या भरणमात्रम्। पुत्रा यद्यसंस्कृताः केचित्तदा संस्कृतास्तान्समुदायद्रव्येण संस्कुर्युरपि। कन्याभ्यस्तु स्वजातीयभ्रातृभागचतुर्थं चतुर्थमंशं दद्युरदित्सवः पतिताः स्युः। अत्र चतुर्थांशयोजनैवम्। यदि ब्राह्मणीपुत्र एक एव ब्राह्मणीकन्या चैका तदा पित्र्यं कृत्स्नं द्विधा विभज्य पुनरेकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा शेषं पुत्रो गृह्णाति। यदा द्वौ पुत्रौ कन्या चैका तदा त्रिधा विभज्य तत्रैकं भागं चतुर्धा विभज्यैकं भागं कन्यायै दत्त्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः। यदि पुत्र एको द्वे कन्ये तदा त्रिधा विभज्य तत्र द्वौ भागौ चतुर्धा विभज्य तुरीयं तुरीयमंशं कन्याभ्यां दत्त्वा शेषं पुत्रो गृह्णीयात्। यदि पुत्रौ द्वौ कन्ये द्वे तदा चतुर्धा विभज्य द्वौ भागौ चतुर्धा चतुर्धा विभज्य तुरीयं तुरीयमंशं कन्याभ्यां दत्त्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः। एवं समानजातीयद्वित्रादिसमविषमभ्रातृभगिनीषु योज्यम्। यदा तु ब्राह्मणीपुत्र एकः क्षत्रियाकन्या चैका तदा पित्र्यं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रीन् चतुर्धा विभज्य तुरीयमंशं क्षत्रियकन्यायै दत्त्वावशिष्टं ब्राह्मणीपुत्रो गृह्णाति। यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियकन्या चैका तदा पित्र्यमेकादशधा विभज्य क्षत्रियापुत्रभागांस्त्रीन् चतुर्धा विभज्य तुरीयं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रौ द्वौ विभज्य गृह्णीतः। यदि ब्राह्मणीपुत्र एकः क्षत्रियाकन्ये द्वे तदा पित्र्यं दशधा विभज्य क्षत्रियपुत्रयोस्त्रीन् त्रीन् भागान् चतुर्धा चतुर्धा विभज्य तुरीयं तुरीयमंशं क्षत्रियकन्याभ्यां दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णाति। यदा ब्राह्मणीपुत्रौ द्वौ क्षत्रियकन्ये द्वे तदा पित्र्यं चतुर्दशधा विभज्य क्षत्रिय-

---

१ B reads शूद्रस्य तु

२ B reads पुत्रास्तदभक्ते सति जातः पुत्रः पितुरूर्ध्वं (omitting a few lines through oversight).

३ B reads स्वांशमेव मातुश्च कृत्स्नमेव दुहित्र्या दौहित्रस्य वाभावे

पुत्रयोर्भागांस्त्रींश्चतुर्धा चतुर्धा विभज्य तुरीयं तुरीयमंशं क्षत्रियाकन्याभ्यां दत्त्वा शेषं ब्राह्मणीपुत्रौ विभज्य गृह्णीतः। एवं सर्वत्र विजातीयभ्रातृभगिनीसंख्यासाम्यवैषम्ययोरूह्यम्। अजीवद्विभागदशायां मातरि स्पष्टगर्भायामपुत्रस्य भ्रातुर्वा पत्न्याः प्रसवं प्रतीक्ष्य विभजेयुः। पितर्यजीवति विभागोऽजीवद्विभागः। अस्पष्टगर्भायां तु विभक्ताः प्रातिस्विकभागेभ्यस्तदुत्थाय सहितेभ्यः पित्रर्णापनयावशिष्टेभ्यः किंचित्किंचिदुद्धृत्य स्वभागसमं विभक्तजाय दद्युः। पैतामहे स्वेऽविभक्ते सति अजीवत्पितृकाः पौत्रा यथैकस्य द्वावन्यस्य त्रयोऽपरस्य चत्वारस्तदा ते स्वस्वपितृभागमेव संभूय गृह्णन्ति। यदा तु केषांचिद्ध्रियते पिता केषांचिदतीतस्तदापि ध्रियमाणः स्वभागमतीतभ्रातृभागं च तत्तत्पुत्रा[1] गृह्णन्ति। अविभक्तेष्वन्योन्यातिसंधानेनापहृतवस्तु विभागादूर्ध्वमेकेनापि दृश्यमानं सर्वे विभज्य गृह्णीयुः। अत्रोद्धारविभागो नास्ति। अपहर्तुः स्तेयदोषोऽस्त्येव। पित्र्यमनीहमानः स्वल्पमसारमपि वा गृहीत्वा विभक्तो भवेत् स्वपुत्रादेर्दायजिघृक्षा मा भूदिति। ऋणं तु पुत्रेण पौत्रेण वापाकरणीयमेव रिक्थाभावेपीत्युक्तं प्राक्।

**अथाविभाज्यम्।** पितरि जीवति श्रमार्जितं मैत्रमौद्वाहिकं प्रतिगृहीतं क्षेत्रव्यतिरिक्तं क्रमागतमन्यापहृतं पुत्राणामेकेनेतराभ्यनुज्ञयोन्मोचितमुद्धृतं विद्यालब्धं न विभाज्यमर्जक एव गृह्णीयात् क्षेत्रे तुरीयांशमेव स्वयं गृहीत्वावशिष्टमन्यैः सह यथांशं गृह्णीयात्। श्रममैत्र्युद्वाहप्रतिग्रहोद्धारणविद्यासु पितृद्रव्याविरोधश्चेत्, अन्यथा विभाज्यमेव। तत्रार्जकस्य द्वौ भागौ। अविभक्तानामेकेन साधारणार्थस्य संवर्धनरूपे सामान्यार्थसमुत्थाने स्वभाग एव न द्वौ। प्रेते तु पितृद्रव्या[2]विरोधेनार्जितावप्यविभाज्यौ योगक्षेमौ[3]। योगक्षेमाविष्टापूर्ते। राजमन्त्रिपुरोहितादयोप्येवमित्येके। पितृभ्यां विभागात्प्रागूर्ध्वं वा यस्य यत्प्रीतिदत्तं तत् तस्यैव। वस्त्रवाहनालंकारशय्यादिबहुकालमुपभुज्यमानमुपभोक्तुरेव। तदुपजीविनां तु विभाज्यं बहुत्वे वैषम्येणाविभाज्यं ज्येष्ठस्यैव। पितुरुर्ध्वं तदुपभुक्तं तच्छ्राद्धभोक्त्रे देयम्। कूपमार्गादि मूल्येन न विभाज्यं यथासंभवमुपभोक्तव्यम्। कृतान्नं तण्डुलादि चैवम्। दास्यो विषमा मूल्येन विभाज्या यथासंभवं पर्यायेण कर्म कारयितव्याः। पित्रवरुद्धास्तु सभा अप्यविभाज्या इत्यादि।

**अथ पुत्रभेदेन दायानुक्रमः।** सवर्णादिभार्यायामुत्पादित औरसः। पुत्रीकृतः पुत्रिकायाः पुत्रो मातामहस्यैकः पुत्रः पुत्रिकैव पुत्रोन्यः। स्वक्षेत्रे देवरादिनोत्पादितः क्षेत्रजः स क्षेत्रिण एव। तद्भेदस्तु द्व्यामुष्यायणो बीजिक्षेत्रिणोरुभयोरपि रिक्थहारी पिण्डदश्च। भर्तृगेहे प्रच्छन्न उत्पन्नो गूढजः। सवर्णजत्वनिश्चये सति पुरुषविशेषजत्वनिश्चयाभाव एव भर्तुः। एवमनूढायां पितृगेहे स्थितायामेव कन्यायामुत्पन्नः कानीनः।

---

१ B reads भागं च तत्पुत्राः

२ B reads ०द्रव्याविरोधेनापि ज्येष्ठाधिगमे यवीयांसः स्वभागं लभन्त एव विद्यानुपालिनाश्चेत् (? ०नश्चेत्) योगक्षेमौ पितृद्रव्याविरोधेनार्जिता०

३ A omits योगक्षेमौ

